ಶಮ್ಯಾಪ್ರಾಸಗ್ರಂಥಮಾಲಾ - 26

# शेषवाग्वज्रः



ರಚನೆ:

ಶ್ರೀಶ್ರೀವಿಶ್ವನಂದನತೀರ್ಥಶ್ರೀಪಾದರು

ಪ್ರಕಾಶನ

ಶ್ರೀವಿಶ್ವನಂದನತೀರ್ಥಶ್ರೀಪಾದಸೇವಾಸಮಿತಿ.

## ಶೇಷವಾಗ್ವಜ್ರ: -

ಶೇಷವಾಗ್ವಜ್ರ. ಈ ಗ್ರಂಥವು ಸರ್ವಧಾರಿ ಸಂವತ್ಸರದ ಚೈತ್ರ.ಶುದ್ಧ.ಪೂರ್ಣಿಮಾ 20-04-2008ರಂದು ಶ್ರೀಶ್ರೀವಿಶ್ವನಂದನತೀರ್ಥಶ್ರೀಪಾದರು ನಡೆಸಿದ ಪ್ರಥಮ ಶ್ರೀಮದ್- ಬ್ರಹ್ಮಸೂತ್ರ-ಅನುವ್ಯಾಖ್ಯಾನ-ನ್ಯಾಯಸುಧಾ ಮಂಗಳ ಮಹೋತ್ಸವದಲ್ಲಿ ಶ್ರೀಮುಳಬಾಗಿಲು ಮಠಾಧೀಶರಾದ ಶ್ರೀಶ್ರೀವಿಜ್ಞಾನನಿಧಿತೀರ್ಥ ಶ್ರೀಪಾದರಿಂದ ಬಿಡುಗಡೆಗೊಳಿಸಲ್ಪಟ್ಟಿತು.

ರಚನೆ:

ಶ್ರೀಶ್ರೀವಿಶ್ವನಂದನತೀರ್ಥಶ್ರೀಪಾದರು



ಪ್ರತಿಗಳು : 150

ಬೆಲೆ : ರೂ.

ಪ್ರಕಾಶನ : 2008

ಪ್ರಕಾಶಕರು -

ಶ್ರೀವಿಶ್ವನಂದನತೀರ್ಥಶ್ರೀಪಾದಸೇವಾಸಮಿತಿ

03.ರಾಘವೇಂದ್ರಕಾಲೋನಿ.

ಚಾಮರಾಜಪೇಟೆ.ಬೆಂಗಳೂರು.560018.

ದೂರವಾಣಿ -080- 32909116

ಅಕ್ಷರ ಸಂಯೋಜನೆ : ಅಂಜನ್ ಪ್ರಸಾದ್.

ಶಮ್ಯಾಪ್ರಾಸ ಪ್ರಕಾಶನ. 080-26391610.

ಮುದ್ರಣ : ಮಂಜುನಾಥ ಮುದ್ರಣಾಲಯ. 93412 79130 .ಬೆಂಗಳೂರು.

॥ श्रीलक्ष्मीहयग्रीवो विजयते ॥

# श्रीश्रीविश्वनन्दनतीर्थश्रीपादाः

**श्रीक्षेत्रहनसोगे मध्वमठ, हनसोगे, के. आर्.नगर ताल्लूकु, मैसूरुजिल्ला.**

# शुभसन्देशः

श्रीमद्भगवत्पादानां प्रथमशिष्यैः श्रीमत्पद्मनाभतीर्थैः प्रवर्तितायां परम्परायां नवमस्थानमलङ्कृतवन्तः श्रीमत्स्वर्णवर्णतीर्थानां करकमलजाः श्रीपादराजेति प्रसिद्धाः श्रीलक्ष्मीनारायणमुनयः वाग्वज्राख्यं महाग्रन्थं निर्मातुं श्रीमन्न्यायसुधावाक्यार्थसङ्ग्रहं चक्रुः ॥

यथोक्तं तैरेव

**'श्रीमन्न्यायसुधाग्रन्थात् क्रियते त्वर्थसङ्ग्रहः ।**
**वाग्वज्राख्यं महाग्रन्थं निर्मातुं तर्कसङ्ग्रहम् ॥** इति ॥

परन्तु दौर्भाग्यतोऽस्माकं भागश एवोपलब्धोऽयं ग्रन्थः । उपलब्धे ग्रन्थभागे जिज्ञासाधिकरणस्य वियदादिकतिपयाधिकरणानां चोपन्यासो दृश्यते । एतयोर्मध्ये विष्णुतत्त्वनिर्णयोपन्यासो निवेशितः ॥

महिशूरनगरस्थप्राच्यविद्यासंशोधनालयात् हस्तलिखितं वाग्वज्र-पुस्तकमेकं सम्पाद्य मुळबागिलुरङ्गनाथाचार्यैः (पश्चात् श्रीसत्यप्रमोद-तीर्थेभ्यः सम्प्राप्ततुरीयाश्रमैः श्रीप्रज्ञाननिधितीर्थैः) प्रथमतो वाग्वज्रपुस्तकं छापितम् । सन्त्यत्र बहवो मुद्रणदोषाः । शुद्धं पाठं संशोध्य कर्णाटभाषान्तरसहितं वाग्वज्रं प्रकाशितुकामा अद्यतनश्रीपादराज-मठाधीशाः श्रीविज्ञाननिधितीर्थाः तत्कार्यभारं मयि निवेशयामासुरित्यहो श्रीपादराजानामल्पे मयि प्रसादविशेषः ॥

तथाचास्मत्पूर्वाश्रमे जिज्ञासाधिकरणोपन्यासात्मकं प्रथमभागं तुरीयाश्रमस्वीकारानन्तरं विष्णुतत्त्वनिर्णयोपन्यासात्मकं द्वितीयभागं च

यथाशक्ति संशोध्य भाषान्तरं कृत्वा समर्पितवन्तः ।। तावेतौ भागौ श्रीपादराजमठतः प्रकाशतावुपलभ्येते ।। एतत्कार्यनिर्वहणकाले अस्माभिश्चिन्तितमुर्वरितम् इदानीमनुपलब्धं सुधाभागं वाग्वज्रशैलीमनुसृत्य **शेषवाग्वज्र**रूपेण सङ्गृह्य प्रकाशयाम इति ।।

इदानीमस्मत्प्रथमसुधामङ्गलमहोत्सवे शेषवाग्वज्रस्य प्रथमभागं जन्मादिचतुरधिकरण्युपन्यासरूपं विदुषां पुरतः स्थापयितुमुत्सहामहे ।।

श्रीमन्न्यायसुधायां तट्टिप्पणीषु च वर्तमानान्येव वाक्यानि निवेशितानि ग्रन्थेऽस्मिन् इति किमनेन गतार्थेनेति नाशङ्कनीयम् ।। प्रमाणलक्षणभावमेव सङ्गृह्यमाना अपि टीकाकाराः यथा मन्दोपकारय प्रवर्तितवन्तस्तथा प्रायः टीकाटिप्पणीगतवाक्यान्येव सूत्रानुव्याख्येऽस्पृष्ट्वा सङ्गृण्हाना वयमपि ये गम्भीराणि सुधावाक्यान्यवगाढुमसमर्थास्तेषामुपकाराय अधीतन्यायसुधानां सुखेन तद्गतप्रमेयाणां बुद्धावारोहाय वाक्शुद्धये चास्माकं प्रवृत्ता इति सन्तोष्टव्यम् ।। अत्वरमेतद्ग्रन्थमवगाहमानाः सन्तो गतार्थताशङ्कां स्वयमेव परिहरिष्यन्तीति तदर्थं न वयं विशेषतो यतामहे ।।

विना यदुपजीवनं न शक्नुमो वयमेतत्साहसं कर्तुं तानस्मद्गुरून् श्रीमद्देवेन्द्रतीर्थान् वारं वारं स्मरन्तोऽस्मद्गुरून् श्रीपेजावरमठाधीशान् सर्वेष्वस्मज्ज्ञानकार्येषु बलप्रदान् मुहुर्मुहुर्नमन्तोऽस्मच्छिष्यं प्रदीपसिंहाचार्यं ग्रन्थप्रकाशनेऽस्मिन् निरतं सहृदयमभिनन्दन्तो विरमामहे ।।

**इति नारायणस्मरणानि**

**श्रीश्रीविश्वनन्दनतीर्थाः**

**सर्वधारि.सं. चैत्र.शुद्ध.त्रयोदशी.**

# ।। श्रीश्रीविश्वनन्दनतीर्थश्रीपादविरचितः
# शेषवाग्वज्रः प्रारभ्यते ।।

## मङ्गलाचरणम्

गोपीनाथं हयग्रीवं लक्ष्मीशं रङ्गविठ्ठलम् ।
प्रणम्य श्रीमदानन्दभगवत्पादसद्गुरून् ।। १ ।।

श्रीमत्पङ्कजनाभार्यान् टीकाकृत्पादसन्मुनीन् ।
लक्ष्मीनारायणमुनीन् चन्द्रिकाचार्यसद्गुरून् ।। २ ।।

'वादी मध्वो यस्य राजा' तान् भावबोधसद्गुरून् ।
श्रीमत्परिमलाचार्यान् मद्गुरूंस्तद्गुरूंस्तथा ।। ३ ।।

कुर्महे शेषवाग्वज्रं प्रीत्यै माधवमध्वयोः ।
यथाधीतं यथामति केवलं तत्कृपाबलात् ।। ४ ।।

बुधैरपि सुदुर्बोधे ग्रन्थेऽस्मिन् साहसस्तु यः ।
क्षन्तव्यः कृपया सद्भिरिति सम्प्रार्थयामहे ।। ५ ।।

श्रीश्रीपादराजोपाह्वः श्रीलक्ष्मीनारायणमुनिः श्रीमन्न्यायसुधासङ्ग्रहरूपं वाग्वज्राख्यं महाग्रन्थं ततान । सोऽयं ग्रन्थ इदानीं भागश एवोपलब्धः । तच्छेषपूरणार्थं श्रमोऽयमास्माकः सार्थक इति मन्यामहे ।।

*// अथ जन्माधिकरणम् //*

**।। ॐ जन्माद्यस्य यतः ॐ ।।**

प्रथमसूत्रे ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । सैव क्रियते जन्मादिसूत्रैः । स्वरूपफलसाधनजिज्ञासा हि ब्रह्मजिज्ञासा । तत्र ब्रह्मस्वरूपस्य प्रधानत्वम् । ब्रह्मोपहितत्वात् साधनफलयोरप्राधान्यमिति स्वरूपजिज्ञासैव

प्रथमं प्राप्ता । स्वरूपजिज्ञासा च लक्षणप्रमाणाभ्यां भवति । तत्रापि लक्षणज्ञानस्य प्रयोजनं सजातीयविजातीयवस्तुव्यावृत्तिरिति लक्षणेन स्वेतरसमस्तवस्तुव्यावत्ततया स्वरूपे प्रतिपादिते तत्र प्रमाणाकाङ्क्षा जायते । अतः लक्षणप्रमाणयोरपि लक्षणस्यैव प्राथम्यमिति ब्रह्मणो लक्षणमुच्यतेऽस्मिन्नधिकरणे ॥

अन्तःसमुद्रगत्वेन, विश्वप्रसूतेः रमायाः कारणत्वेन अम्भ्रणीसूक्ते वामनसूक्ते च **'अम्भस्य पारे'** इत्युपनिषदि **'आपो नाराः'** इत्यादि स्मृतिषु च प्रतिपादितं तद् ब्रह्म **'जन्माद्यस्य यतः'** इति सूत्रेण लक्ष्यते स्वेतर-समस्तवस्तुव्यावर्तकधर्मवत्तया प्रतिपाद्यते ॥

निर्विशेषस्वरूपमात्रमिह जन्मादिसूत्रे लक्ष्यतयाऽभिप्रेतमिति केचिदाचक्षते, । तन्निरासार्थम् **'अन्तःसमुद्रगम्'** इत्याद्युक्तम् ॥ न चामुख्यं ब्रह्म जात्यादिकमिह लक्ष्यमिति परस्यापि सम्मतम् । मुख्यं तु ब्रह्म सविशेषमेव, समुद्रान्तर्गतत्वाद्यनेकविशेषणविशिष्टं वस्तूक्त्वा **'तदेव ब्रह्म परमं कवीनाम्'** इति तस्यैव मुख्यब्रह्मत्वाभिधानादिति ॥

ननु **'अथ कस्मादुच्यते ब्रह्मेति ,बृहन्तो ह्यस्मिन् गुणाः'** इत्यादौ समस्तगुणपूर्णत्वं ब्रह्मत्वं प्रसिद्धमेव; तत्किं लक्षणान्तरेण ? इति चेत् सत्यम् ।

**'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तम् '**

इति भगवत्पादैरुक्तदिशा गुणपूर्णत्वोपपादनार्थमेव एतल्लक्षणाभिधान-मित्यदोषः ॥ प्रसिद्धेन ह्यसाधारणेन धर्मेणाप्रसिद्धं वस्तु स्वेतराभिन्नतया-ऽवगन्तव्यम् । परमेश्वरस्य समस्तगुणसम्पूर्णत्वमप्रसिद्धमिति तत् लक्षणतया निर्देष्टुं न शक्यते । अनेन जगज्जन्मादिकारणत्वरूपलक्षणेन ब्रह्मणि लक्षिते सति समस्तगुणपूर्णत्वरूपप्रधानलक्षणमपि सिद्ध्यति । एतयोर्लक्षणयोरविनाभावात् ॥

अत्र **'कर्तृत्वात् सगुणं ब्रह्म'** इति भागवतोक्तिः प्रमाणम् ॥

ननु अस्मिन् सूत्रे जन्मादिकं वा लक्षणत्वेनाभिप्रेतं तत्कारणत्वं वा ? नाद्यः । तस्य जगद्धर्मत्वात् । न द्वितीयः । ब्रह्मत्वं यथा अप्रसिद्धमेवं तदीयजगज्जन्मादिकारणत्वस्याप्यप्रसिद्धत्वात् । न च अनुमानात् जगज्जन्मादिकारणत्वरूपलक्षणासिद्धिः । **'शास्त्रयोनित्वात्'** इत्युत्तरसूत्रे कारणत्वस्य शास्त्रैकसमधिगम्यत्वोक्तेः तद्विरोधात् । अतः कथमेतदपि लक्षणम् ? इति चेत् - उच्यते । जगज्जन्मादिकारणत्वमेव लक्षणम् । अस्य प्रत्यक्षादिप्रमाणप्रमितस्य समस्तप्रपञ्चस्य , यथा सम्भवं जन्मादि यतो भवति, तद्ब्रह्म; इति सम्बन्धात् ॥

न चैतदपि अप्रसिद्धम्, **'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' 'भर्ता सनन् भ्रियमाणो बिभर्ति' 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभि संविशन्ति'** इत्यादि श्रुतिषु प्रसिद्धत्वात् ॥ नात्र विवादोऽस्ति ॥

न च वाच्यं गुणसंपूर्णताऽपि च श्रुतिप्रसिद्धैव । अतः सैव लक्षणत्वेनोच्यतामिति, तस्याः श्रुतिप्रसिद्धाया अप्यसम्भावनाशङ्का-ग्रस्तत्वात् । जगज्जन्मादिकारणत्वं तु श्रुतिप्रसिद्धं द्वितीयाध्याये चेतनत्व-सर्वस्वतन्त्रसर्वशक्तिमत्वादियुक्तिभिरनुगृह्यत इति वक्ष्यते । एवं चेत् गुणपूर्णत्वेऽपि युक्तिरुच्यतामिति चेत् सैव जगज्जन्मादिकारणत्वरूपा अस्मिन्नधिकरणे निर्णीयते ॥

केचित् इदं सूत्रं 'आद्यस्य हिरण्यगर्भस्य जन्म यतस्तद्ब्रह्म' इति व्याचक्षते । अपरे 'जन्म आदिर्यस्य तत् जन्मादि अवस्थानम्' इति । अवस्थानं स्थितिः । जगत्पालको हि भगवान्विष्णुरिति प्रसिद्धिः । अन्ये तु स्थितिभङ्गावादाय 'सृष्टिस्थितिभङ्गं समासार्थः' इति । तदिदमप्ययुक्तम् ॥

श्रौतं हि ब्रह्मणो लक्षणमिहोच्यते । **'यतो वा इमानि भूतानि**

**जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभि संविशन्ति' 'य आत्मानमन्तरो यमयति' 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' (श्रुतितात्पर्योदाहृता उदारशाण्डिल्यश्रुतिः) 'यतः प्रसूता जगतः प्रसूतिः' 'सर्वे निमेषा जज्ञिरे' 'यस्मिन्निदं सं च विचैधि सर्वम्'** इत्यादि श्रुतयः विष्णोरेव सृष्ट्याद्यष्टकं वर्णयन्तीति ॥

ननु सृष्ट्यादिहेतुत्वं प्रत्येकं ब्रह्मलक्षणम् उत मिलितम् । आद्येऽनेकलक्षणोक्तिर्व्यर्था स्यात् । न द्वितीयः । एकैकस्य लक्षणस्य अतिव्याप्त्यभावात् । अतिव्याप्तिसंभवे हि विशेषणं सार्थकमिति चेत् आद्यपक्षो अङ्गीक्रियते । नचोक्तदोषः । जिज्ञास्यब्रह्मणो हि स्वेतरसर्वव्यावृत्तये लक्षणमत्र सूत्रे उच्यते । न चैकमेव लक्षणं सर्वत्र जिज्ञासाविधायकश्रुतिषु **'यतो वा इमानि भूतानि जायन्ते'** इत्यादिषु श्रूयते । किं त्वासु ब्रह्मजिज्ञासाविधायकश्रुतीषु क्वचित्सृष्टिः क्वचित् स्थितिरित्यष्टकं जिज्ञास्याद्धरेर्विश्वस्योक्तमित्यनेकलक्षणोक्तिः न व्यर्था । किञ्च विभवार्था अनेकलक्षणोक्तिरित्यपि ज्ञेयम् । **'नारायणम्'** इति आद्यपद्यव्याख्यानावसरे व्यक्तमिदम् ॥

**'तद्विजिज्ञासस्व तद्ब्रह्म'** इति जिज्ञास्ये वस्तुनि ब्रह्मशब्दः श्रूयते । ब्रह्मशब्दश्च समस्तगुणपूर्णतावाची जीवस्य गुणपूर्णत्वाभावाज्जिज्ञास्यं वस्तु जीवातिरिक्तमिति पूर्वसूत्रे अभिहितम् । तत्र सन्देहः 'तद्ब्रह्म' इत्ययं शब्दः किं प्रसिद्धजीवरूपार्थपर उताप्रसिद्धविष्णुरूपार्थान्तरपर इति । ननु ब्रह्मशब्दो गुणपूर्तिवाची न वा इत्येव सन्दिह्यताम् । किं तात्पर्यसन्देहेन ? इति चेत् - वाचकत्वसिद्धावपि तात्पर्यकोटिकसन्देह एव दर्शनीयः । शक्तितात्पर्ययोः परस्परपरिहारेणापि सत्त्वात् । तस्मात् यदि ब्रह्मशब्दोऽयं जीवरूपप्रसिद्धार्थपरो न स्यात् तदैव ब्रह्मशब्दस्य गुणपूर्णतापरत्वं सम्भवतीति सार्थकोऽयं विचारः ॥

एवं सन्देहे ब्रह्मशब्दः प्रसिद्धार्थपर एवेति पूर्वपक्षः । तथाहि - जीवपरत्वाङ्गीकारे लाघवम् । जीवो हि स्वरूपतः प्रसिद्धः । तत्र ब्रह्मशब्दस्य शक्तिरपि **'बृह-जाति-जीवकमलासनशब्दराशिषु'** इत्यभिधानात् सिद्धा । केवलं तात्पर्यं कल्प्यम् । शक्तिवशादेव अर्थे प्रतीते त्यागकारणाभावादेव तात्पर्यं च सिद्धम् । अप्रसिद्धार्थत्वे तु तस्यार्थस्य, तद्वाचितायाः, तत्र तात्पर्यस्य च कल्प्यत्वाद्गौरवम् ॥

ननु जात्यादिकमपि ब्रह्मशब्दार्थत्वेन प्रसिद्धमेव । कथं तद्विहाय जीवपर एवायं निश्चीयते ? इति चेत् - उच्यते । जात्यादिकं यद्यपि प्रसिद्धम्, तथापि तस्य सुप्रसिद्धत्वेन जिज्ञासानुपपत्तेः परित्यागः । कमलासनस्य देवतात्वेनातीन्द्रियत्वात् अप्रसिद्धत्वेऽपि न तस्य जिज्ञास्यत्वं प्रयोजनाभावात् । प्रयोजनसद्भावेऽपि तस्य प्रयोजनस्य उपासनाधीनत्वात्, उपासनायाश्च आरोपितरूपेणापि सम्भवात्, वस्तुतत्त्वव्यवस्थापकतया जिज्ञासया न कृत्यम् ॥ जीवस्य स्वप्रकाशत्वेन स्वरूपतः प्रसिद्धत्वेऽपि देहेन्द्रियमनोभ्यः अतिविविक्तता न प्रसिद्धिरिति जिज्ञासा युज्यते । अतो जीवपर एवायं ब्रह्मशब्दः इति प्राप्ते प्रतिविहितं भगवता सूत्रकारेण **'जन्माद्यस्य यतः'** इति ॥

जिज्ञासाविधात्रीषु **'तद्विजिज्ञासस्व तद्ब्रह्म' 'य आत्मा सोऽन्वेष्टव्यः'** इत्यादि श्रुतिषु जिज्ञास्यत्वेनोक्तात् ब्रह्मात्मादिशब्दवाच्यात् हरेः विश्वस्य सृष्ट्यादिकं भवतीति 'यतो वा इमानि भूतानि जायन्ते' इत्यादि पूर्वोत्तरवाक्यैरुच्यते, । आसु श्रुतिषु सृष्ट्यादयः हरेरेवोक्ता इति न च ते जीवे सम्भवन्ति । अतः प्रसिद्धार्थे बाधकसद्भावात् **'तद्ब्रह्म'** इत्यादिषु विद्यमानः ब्रह्मादिशब्दोऽलौकिकस्य हरेरेव प्रतिपादको न जीवस्य । अतो युक्तं तस्य हरेः तेन गुणपूर्णत्वाभिधानमिति सूत्रकारस्याभिप्रायः ॥

ननु कथं जगत्सृष्ट्यादिकारणत्वं हरेरेव स्यात् ? यतः ' **हिरण्यगर्भः**

**समवर्तताग्रे'** इत्यादि श्रुतिषु हिरण्यगर्भस्य, **' एको रुद्रो न द्वितीयाय तस्थे'** इत्यादिषु रुद्रस्य, गणपत्यथर्वशीर्षादिषु गणपत्यादीनां च सष्ट्यादिकारणत्वं प्रतीयते । अतो लक्षणस्यातिव्याप्तिरिति चेन्न । आसु श्रुतिषु विश्वस्य सृष्ट्यादयो हरेरेवोक्ता इति न लक्षणस्यातिव्याप्तिः । तत्कथमिति चेत् **'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'** इति भाल्लवेयश्रुतेः, **'यो देवानां नामधा एक एव '** इति विश्वकर्मसूक्तस्थश्रुतेश्च **'हिरण्यगर्भ'** इत्यादीनि सर्वाणि नामानि विष्णोरेव यतः, ततः उदाहृतासु श्रुतिषु विश्वस्य सृष्ट्यादयो हरेरेव सकाशादुक्ताः ॥

ननु यथा हिरण्यगर्भादिशब्दान् विष्णुविषयान् व्याख्याय **'हिरण्यगर्भः समवर्तताग्रे'** इत्यादि श्रुतयः विष्णौ योज्यन्ते तथा विष्ण्वादिशब्दान् हिरण्यगर्भादौ व्याख्या **'य उ त्रिधातु'** इत्यादि श्रुतयः हिर्णयगर्भादौ कुतो न योजनीया इति चेद् उच्यते । **' नामानि विश्वाभि न सन्तिलोके' 'यो देवानां नामधा एक एव'** इति प्रतिषेधात् विष्णोरन्यस्य नामैव नास्ति । दूरे विष्ण्वादिनाम ॥ नामाभावे व्यवहारविलोपप्रसङ्ग इति चेन्न । मुख्यतो नास्तीत्यभिप्रायात् ॥

ननु तथाऽपि जगज्जन्मादिकर्तृत्वरूपमिदं लक्षणं विष्णावेवासम्भवि । **'जनितोत विष्णोः'** इति श्रुतौ सोमात् विष्णोर्जन्म श्रूयते । एवं जन्मादिदोषश्रवणात्ऽस्मदादेरिव विष्णोरपि जगज्जन्मादिकारणत्वं न सम्भवति इति चेद् उच्यते ।

**'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।**
**चिन्त्या अचिन्त्याश्च तथैव दोषाःश्रुताश्च नाज्ञैर्हि तथा प्रतीताः ॥'**

इति श्रुतेर्विष्णोर्निर्दोषत्वं ज्ञायते । अस्या श्रुतेरर्थः- **देवे** क्रीडादिगुणविशिष्टे हरौ **सुविरुद्धाः** लोकदृष्ट्या अत्यन्तविरुद्धा **अपि** अणुत्वमहत्वादयः **श्रुताः** 'अणोरणीयान् महतो महीयान्' इत्यादि श्रुत्युक्ताः

**गुणाः सन्ति । अश्रुता अपि** श्रुत्यप्रतिपादिता अपि **चिन्त्याः** रमादिभिः स्मर्तव्याः **अचिन्त्याश्च** तैरपि अस्मर्तव्याश्च गुणाः सन्ति । **अत्र** अस्मिन् विषये **नैव शङ्का** सन्देहो नास्त्येव । श्रुता अपि दोषाः न सन्ति । श्रुतत्वे कथं 'न' इत्युक्तिः इत्यत आह **'अज्ञैर्हि तथा प्रतीताः'** इति ॥

अनेन इदमुक्तं भवति । वाक्यार्थज्ञाने व्याख्यानं मुख्यकारणम्; यथाहुः **'व्याख्यानतो विशेषप्रतिपत्तिः'** इति । तत्रापि यदीयं व्याख्येयं तदीयमेव चेद् व्याख्यानं तदा सुतरां ततोऽर्थावगतिः । अर्थावगमे विवक्षाया मुख्यत्वात् तस्याश्च स्वयं व्याख्यात्रैव विवृतत्वात् । एवं स्थिते **'गुणाः श्रुताः'** इति श्रुतिरेव सर्वश्रुतीर्व्याख्याति । सर्वाः श्रुतयो विष्णोरनन्तानलौकिकान् गुणान् वर्णयन्ति न कुत्रापि दोषान् । दोषवाद-प्रतीतिस्तु शब्दशक्तितात्पर्यापरिज्ञाननिमित्तैवेति ॥

एवं श्रुत्यैव सर्वासु श्रुतिषु विष्णुगुणपूर्तिपरतया व्याख्यातासु कथं तद्विरुद्धं दोषपरतया व्याख्यानं युज्यते ? तर्हि **'जनितोत विष्णोः'** इत्यस्य का गतिरिति चेत् विष्णुरिति यजमानस्य यज्ञस्य वा नामेति ब्रूमः । अस्यां श्रुतौ 'सोमः पवते' इति सोम उपक्रान्तः । **'सोमेन यजेत'** इति सोमस्य यागसाधनत्वश्रवणात् यजमानत्वमपि यागाधीनमिति प्रसिद्धत्वात् तौ सोमाद्भवत इति योज्यते । अथवा सोमशब्दवाच्यात् क्षीराब्धिशयनात् मूलरूपाद् विष्णुशब्दाभिधेयरूपविशेषस्य प्रादुर्भावोऽत्र विवक्षितः ॥

किञ्च वेदो हि जीवानां मोक्षमुद्दिश्य प्रवृत्तः । **'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते'** इति श्रुतेः । मोक्षश्च भगवत्प्रीत्यैकसाध्यः । **'यस्य प्रसादात् परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण'** इति श्रुतेः । **यस्य** भगवतो अनुग्रहात् परमदुःखरूपा**दस्मात् संसारात्** जीवो **मुच्यते, नान्येन साधनेने**ति तदर्थः । अतो भगवत्प्रीतिसम्पादनद्वारा मोक्षं साधयता वेदेन जीवान् प्रति तदेव बोध्यं यद्भगवत्प्रीतिसाधनं भवेत् । प्रीतिश्च

गुणोत्कर्षज्ञानादेव स्यात् । यथोक्तं ' **न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्**' इति । तथाच तद्विरुद्धपरमेश्वरदूषणे कथं तात्पर्यं स्यात् । दूषणज्ञानस्य प्रीतिसाधनत्वाभावात् । न हि लोके स्वदोषज्ञातरि प्रीतिर्दृष्टेति । लोकन्याया अविरुद्धा वेदेऽपि ग्राह्या इति ॥

तर्हि वेदनां कुत्र तात्पर्यमिति चेत् सर्वेषामपि शब्दानां भगवद्गुण-वर्णन एव तात्पर्यम् ॥ एवं चेत् मोक्षाख्यप्रयोजनमनुसृत्य वेदस्य प्रतीत-विषयपरित्यागेनाप्रतीतविषयान्तरम् अङ्गीकृतं स्यात् । अयमयुक्तः । प्रकृतविषयपरित्यागेन अप्रकृतविषयान्तराङ्गीकारे पुरुषार्थविरोधिनो दुर्गन्धादिग्राहकस्य घ्राणादेस्तद्विषयत्वपरित्यागेन सुगन्धादिविषयत्वं स्यात् इति चेत् विषमोऽयमुपन्यासः । प्रत्यक्षानुमाने हि प्रयोजनोद्देशेन न प्रवृत्ते किन्तु स्वविषयसन्निकर्षव्याप्तिस्मरणादिकारणसन्निधानेन अर्थं ज्ञापयतः । वाक्यं तु श्रोतृपुरुषप्रयोजनार्थमेव प्रवृत्तमिति तदनुगुणमेव विषयं प्रतिपादयेत् । अतः उद्दिष्टपुरुषार्थविरोधिनि तु विषये प्रवर्तमानं कथं प्रमाणं स्यात् ॥

अत्र मीमांसकसम्मतो दृष्टान्तः वर्ण्यते । वेदवाक्यं स्वर्गोद्देशेनाग्निहोत्रं विधाय ' **को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वा**' 'अमुष्मिन् लोके परलोके यदि अस्ति वा न वा स्वर्गशब्दितं सुखमस्ति न वा इति को हि वेद न कोऽपि' इति स्वर्गे संशयं करोति । एवं संशयं कुर्वद्वाक्यमप्रमाणमित्युक्तं पूर्वपक्षेऽर्थवादाधिकरणसूत्रे '**शास्त्रदृष्ट-विरोधात्**' इत्यत्र । इदं वाक्यं प्राग्वंशाख्यपत्नीशालायां धूमजनित-दुःखप्रहाणाय, '**दिक्ष्वतीकाशान् करोति**' इति वाक्यविहितप्रकारेण अतीकाशाख्यच्छिद्राणामवश्यकर्तव्यत्वाय अतीकाशनिर्माणस्तुतिपरमेव । छिद्राभावे धूमेन दुःखं भवति । परलोके सुखं भवेद्वा न वा । इदानीं तु तात्कालिकदुःखपरिहारस्यावश्यम् अतीकाशनिर्माणमिति भावः । अतः

स्वर्गविषयकसंशये तात्पर्याभावात् नाप्रामाण्यमिति सिद्धान्तितम् । तद्वत् अत्रापि भगवत्प्रीतिसाध्यपुरुषार्थविरोधिनि दूषणे न तात्पर्यमिति ॥

ननु आचार्यैः **'याथार्थ्यमेव प्रामाण्यम्'** इति ब्रह्मतर्कवचनमुदाहृतं विष्णुतत्त्वनिर्णये । एवं याथार्थ्यस्यैव प्रमाणत्वात् , फलवत्त्वस्य प्रामाण्याभावात् किमर्थं फलानुसरणम् इति चेत् एकस्माद्वाक्यादर्थद्वये प्रतीते कुत्रार्थे तात्पर्यमिति जिज्ञासायां फलवत्वादस्मिन्नेवार्थे तात्पर्यमिति विषयविशेषनिश्चयोपायत्वेन फलानुसरणमिति ब्रूमः । फलाविरोधिनि विषये वाक्यानां याथार्थ्यस्य निश्चितत्वात् । अन्यथा कथं फलस्य तात्पर्यलिङ्गत्वम् ॥

तथा च वक्ष्यते भगवत्पादैः प्रयोजनाधिकरणे -

**' याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् ।**
**मानत्वमेति तत्रापि यत्सम्पूर्णप्रयोजनम् ॥ '** इति ॥

नन्वस्तु पौरुषेयाणां वाक्यानामियं व्यवस्था । यतः पुरुषः परप्रयोजनार्थं वाक्यमुच्चारयंस्तदीयहिताहितप्राप्तिपरिहारानुगुणार्थमेव वदेत् । तद्विरूद्धं तु वदन्नविश्वसनीयः स्यात् । अपौरुषेयवाक्यं तु प्रत्यगवत् स्वभावादेवार्थं प्रतिपादयति । तत्र बाधकज्ञानादेव प्रतीतविषयत्यागो युक्तो न प्रयोजनवैगुण्येनेति चेन्न । प्रयोजनानुद्देशिनो वाक्यस्यानुपादेयत्वप्रसङ्गात् । यथा पुरुषाभावेऽपि वेदोऽर्थं प्रतिपादयति तथा प्रयोजनोद्देशोऽपि कथं न स्यात् ॥

किञ्च न मोक्षोद्देशेन वेदप्रवृत्तिरानुमानिकी किन्तु स्वयमेव वेदेनोच्यते । तथाच **'अग्निना सिञ्चेत्'** इतिवद्योग्यताविरहादप्रामाण्यमपरिहार्यम् । सिद्धान्तविशेषं तूत्तरत्र वक्ष्यामः ॥

वेदः प्रयोजनोद्देशिप्रवत्तिमान् उपादेयवाक्यत्वात् सम्मतवत्' इति वा वेदो मोक्षोद्देशेन प्रवत्तिमान् तदितरानिच्छूपादेयत्वात् सम्मतवत्' इति वा

अनुमानेन सिद्धम् । किन्तु स्वयमेव वेदेन ' **तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते**' इत्युच्यते । तथा '**अग्निना सिञ्चेत्**' इति वाक्यं योग्यताविरहेण यथा अप्रमाणं तथा '**जनितोत विष्णोः**' इति वाक्यं योग्यताविरहेण प्रतीतार्थे अप्रमाणमेव ।। एवञ्च विष्णौ जन्मादिदोषशङ्कया जगज्जन्मादिकारणत्वम् असम्भावितमिति यदुक्तं तत् परिहृतं वेदितव्यम् ।।

ननु '**हिरण्यगर्भः समवर्तताग्रे**' इत्यादिश्रुतिभिः लक्षणस्य ब्रह्मादिष्वतिव्याप्तिः , 'जनितोत विष्णोः' इत्यादिश्रुत्या विष्णावसम्भवश्च माभूत् । प्रथमानां विष्णुविषयकत्वस्य समर्थितत्वात् , द्वितीयानाम् अर्थप्रच्यावनस्य समर्थितत्वाच्च । शैवादिपुराणैस्तु भविष्यति । तेष्वन्येषां शिवादीनां जगत्कारणत्वस्य, विष्णोरमुख्यत्वस्य चाभिधानात् । न च तेषामपि श्रुतिवद् अन्यार्थत्वम् । तथात्वे शिवादिकारणत्व एव यान्युपक्रमादीनि तात्पर्यलिङ्गानि तेषां विरोधात् इति चेन्न ।

शैवादिपुराणानां श्रुतिविरुद्धार्थे प्रामाण्यानुपपत्तेः । यथाऽऽह जैमिनिः प्रथमाध्यायस्य तृतीयपादीयद्वितीयाधिकरणे '**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्**' इति । तस्यार्थः - श्रुतिविरोधे सति तत्स्मृतिजातम् अनपेक्षम् अनादरणीयम् अप्रमाणमिति यावत् ।। प्रत्यक्षश्रुतिविरोधेऽसति स्मृत्या मूलश्रुत्यनुमानमुक्तमिति ।। पौरुषेयतया शङ्कितदोषस्य वाक्यस्यापौरुषेयवाक्यविरोधेऽप्रामाण्यस्य न्याय्यत्वात् । रुद्रादीनां जगज्जन्मादिकारणत्वं विष्णोरुपसर्जनत्वं च

**'एको नारायण आसीन्न ब्रह्मा न शङ्करः'**

**' वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः'**

इत्याद्यनेकश्रुतिविरुद्धम् । तर्हि ' **इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्** ' इति गीताभाष्यस्य का गतिरिति चेत् तत्र सात्त्विकानि विवक्षितानि । शैवादीनि तु तामसानीति ।।

ननु शैवपुराणादीन्यपि श्रुतिमूलानि । तत्कथं श्रुतिविरोधेनाप्रमाणानि इति चेन्न । मोक्षधर्मे **'शैवान्पाशुपतांश्चक्रे'** इत्युक्तेः तेषां पाशुपतागम - मूलत्वेन श्रुतिमूलत्वाभावात् । तथाऽपि पाशुपतादीनां श्रुतिमूलत्वे पाशुपतात् कृतानां पुराणादीनामपि श्रुतिमूलत्वतादवस्थ्यमिति चेन्न । तेषां मोहार्थं कृतत्वेन विप्रलम्भमूलत्वात् ॥

निर्निमित्तं प्राणिनां मोहमुत्पादयन्तः प्रत्यवायिनः प्रसज्येरन् । न च परव्यामोहनेन किमपि महत्प्रयोजनमस्ति, येन प्रत्यवायमपि न गणयेयुः । अतो मोहार्थं कृतमित्येतत् न युज्यत इति चेत् न । रुद्रादयो हर्याज्ञया मोहकशास्त्राणि चक्रुः । एवं हर्याज्ञानुष्ठानान्न प्रत्यवायोऽस्ति किन्तु भगवदाज्ञापरिपालनेन महाप्रयोजनावाप्तिरेव भवतीति सुप्रसिद्धम् । तदुक्तम्—

**'हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते'** इति ॥

**'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।**
**चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ।**
**दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु'** इति च ॥

तर्हि हरेरेव प्रत्यवायः प्रसज्यते । तस्यापि प्रयोजनं विना प्रत्यवायागणनं च न युज्यते इति चेन्न । तस्य ईश्वरत्वेन प्रत्यवायस्य वा प्रयोजनापेगाया वा अभावात् ॥

किञ्च रुद्रादीनां जगत्कारणत्वे विष्ण्वाद्यशेषनामवत्त्वं स्यात्, अन्यथा विष्ण्वादीनां जगत्कारणत्वाद्यभिधायिनां वाक्यानां विरोधपरिहारोपाया-भावेन 'अयमेव जगत्कारणम्' इति निर्णयानुपपत्तेः । न च तेषां सर्वनामताऽस्ति, तत्र प्रमाणाभावात् । अतः विपर्ययपर्यवसाने तेषां जगत्कारणत्वमपि नास्ति ॥

ननु पद्मपुराणादौ शिवसहस्रनामादौ विष्णुनामानि शिवे प्रतीयन्त इति चेत् मैवम् । **'यो देवानाम्'** इति श्रुतिविरुद्धस्य पुराणादेरनादरणीयत्वात् । श्रुतौ रुद्रादीनां सर्वनामतया अप्रमितत्वात् ॥

किञ्च जगत्कारणेनाज्ञानादिदोषरहितेन भाव्यम् । दोषिणो अस्मदादिवज्जगत्कारणत्वानुपपत्तेः । निर्दोषो हरिरेवेति स एव जगज्जन्मादिकर्ता न रुद्रादिः । रुद्रादीनां परैर्जगत्कारणत्वेनाभिमतानां सर्वेषामपि अज्ञानं, पारतन्त्र्यं , प्रलयेऽभावः, अशक्तिश्च श्रुतौ उदिताः अतो न ते जगत्कारणं भवितुमर्हन्ति ॥ विस्तरस्तु पाशुपताधिकरणे ॥

एवं सूत्रोक्तस्य जगज्जन्मादिकारणत्वरूपस्य विष्णुलक्षणस्य अतिव्याप्तेः असम्भवस्य च परिहृतत्वात् विष्णोरेकत्वेन रामकृष्णादि-नामभेदेन च अव्याप्तिप्रसक्त्यभावाच्च उक्तलक्षणं विष्णोरेव सम्भवति नान्येषाम् ॥

मायावादिनां मते लक्षणसूत्रारम्भ एवानुपपन्न इति वक्तुमुत्तरो ग्रन्थः । तैरेवमभिहितम् । जगज्जन्मादिकारणत्वं न लक्ष्यब्रह्मणः स्वरूपान्तर्गत - लक्षणं किन्तु तटस्थमेव । एषु गृहेषु किं देवदत्तगृहमिति प्रश्ने यत्र कासारः तद्देवदत्तगृहम् इत्युत्तरे दत्ते यथा कासारो गृहबहिर्भूत एव गृहस्य लक्षणं भवति एवमिति भावः ॥

अत्र त्रैविध्यं सम्भवति । मायाविशिष्टं ब्रह्म कारणमिति प्रथमः पक्षः । रज्वाः संयुक्तसूत्रद्वयवत् समप्राधान्येन मायाब्रह्मणी जगदुपादानम् । तत्र सत्तास्फूर्त्यंशयोः ब्रह्मण उपयोगः । जाड्यविकारांशयोस्तु मायाया उपयोग इति ॥

मायाशक्त्युपलक्षितं ब्रह्म कारणमिति द्वितीयः पक्षः । अस्मिन् पक्षे मायाख्यशक्तेः अप्राधान्यं ब्रह्मणः प्राधान्यमिति प्रथमपक्षाद्भेदः । मायाख्या शक्तिरेव जगदुपादानं शक्तेश्च नियमेन शक्तिमदधीनत्वात् शक्तिमति

ब्रह्मणि अर्थादुपादानत्वं पर्यवस्यतीति केषाञ्चिन्मतम् ।। शक्तिमत्वे सविशेषं ब्रह्म स्यादित्यतो मायाशक्त्युपलक्षितमिति ।।

जगत्कारणं तु मायैव तदाश्रयतया ब्रह्म कारणमिति तृतीयः पक्षः । अस्मिन् पक्षे माया ब्रह्मणि आरोपितेति आरोपितमायाया अधिष्ठानभूत-ब्रह्मस्वरूपमन्तरेण वस्तुतः स्वरूपान्तराभावात् मायाया एव साक्षादुपादानत्वेऽपि तदधिष्ठानत्वेन ब्रह्मण उपादानमित्यभिप्रायः ।।

पक्षत्रयेऽपि शुद्धब्रह्मण औपचारिकमेवोपादानत्वमिति ।तदेतदनुपपन्नम् ।।

ब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणं स्वरूपान्तर्गतमेवेदं न तु मायावाद्युक्तरीत्या तटस्थम् ।। यतः इदं लक्षणं स्वलक्षणमेवेति भगवान् सूत्रकारः भागवते कृष्णध्यानानुवादमिषेण स्वयमेव स्पष्टमब्रवीत् ।।

तथाहि दशमस्कन्धे -

**'एकं परं ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम् ।**

**ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृतम् ।।'**

इति कृष्णध्यानप्रकरणे ।। अस्यार्थः - **एकं** स्वगतभेदवर्जितं **परं** लोकविलक्षणं **ज्योतिः** स्वप्रकाशम् **अनन्यं** स्वानधीनरहितम् । न विद्यते अन्यः स्वतन्त्रः यस्मात् स इति विग्रहः । **अद्वयं** समाधिकरहितं **स्वसंस्थया** स्वरूपभूतस्थित्या **नित्यनिरस्तकल्मषं** नित्यं निरस्तं कल्मषं कालुष्यं येन सः, तम् । **अस्य** प्रमाणप्रमितस्य जगतः **उद्भवनादिभिः** जन्मादिकारणत्वरूपैः **स्वलक्षणैः लक्षितं** लक्षीकृतं च तत् **भावनिर्वृतं** ज्ञानानन्दरूपं च । **'स्वलक्षणैर्लक्षितम्'** इति नित्यसापेक्षत्वात् समासः । अलुग्वा ।। एतानि विशेषणानि पूर्वश्लोकस्थात्मशब्दस्य । द्वितीयान्ताना-मेषां पूर्वश्लोकस्थेन **'दध्यौ'** इत्यनेन सम्बन्धः ।। पूर्वश्लोक एवं पठ्यते -

**'ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ।**

**दध्यौ प्रसन्नकरणः आत्मानं तमसः परम् ।।'** इति ।।

**वार्युपस्पृश्य** आचम्य । **तमसःपरं** प्रकृतिविलक्षणम् । अन्यत्स्पष्टम् ॥ तथाच सूत्रकाराभिप्रायाज्ञाननिमित्तं परेषां तटस्थलक्षणव्याख्यानमिति ॥

ननु नायं सूत्रकाराभिप्रायः किन्तु परप्रतीत्यनुवादः । पूर्वश्लोके कृष्णानुष्ठितध्यानस्य प्रकृतत्वात् इति चेन्न । कृष्णध्यानानुवादमिषेण व्यासदेवः स्वयमेवाब्रवीत् ॥

अयमाशयः ॥ पुराणकर्तुः परकृतानुवादो द्वेधा संभवति । निराकरणार्थं वा विधानार्थं वा । तत्र प्रथमस्योदाहरणं यथा

**'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ।**
**नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि ॥**
**यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ॥'**

इत्यादि एकादशस्कन्धे दशमाध्याये । तस्यार्थः- यावत्पर्यन्तं **गुण-वैषम्यं** सृष्टिः । संसार इति यावत् । **तावदात्मनः** जीवस्य **नानात्वं** भेदः 'परमात्मनः सकाशात्' इति शेषः । **यावदात्मनो नानात्वं तदैव** तावत्पर्यन्तमेव **पारतन्त्र्यं** भगवदधीनता । **यावदस्य** जीवस्य अस्वातन्त्र्यं तावत् **ईश्वरत** ईश्वरस्य सकाशात् **भयम्** इति ॥तदेतत्पश्चान्निराक्रियते ॥

**'य एतत्समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिताः ॥'** इति ।

**ये एतत्** 'यावत् स्याद्गुणवैषम्यम्' **इत्याद्युक्तं समुपासीरन्** उपासितवन्तः **ते मुह्यन्ति** मोहं प्राप्नुवन्ति **शुचा** दुःखेन **अर्पिताः** दुःखिनो भवन्तीत्यर्थः ॥

द्वितीयस्योदाहरणं यथा-

**'वाचं जुहाव मनसि तत्प्राण इतरे परम् ।**
**धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् ॥ १ ॥**
**त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ।**

**सर्वमात्मन्यजुहवीत् ब्रह्मण्यात्मानमव्यये ॥२॥** इति

पञ्चदशेऽध्याये धर्मराजकृतलयचिन्तने। तस्यार्थः **वाचं** वागभिमानिनी-मुमां **मनसि** मनोभिमानिनि रुद्रे **जुहाव** उमा रुद्रे लीयते इति चिन्तितवान्। **तत् मनः** प्राणे जुहाव। **परं मनसः** परं प्राणं च **इतरस्मिन्** अपाने जुहाव। प्राणो अपाने लीयत इति चिन्तितवान्। **धृत्या** मनस एकाग्रचित्तेन **सोत्सर्गं** सव्यापारम्। उत्सर्जनं हि अपानस्य व्यापारः। **अपानं तत्परत्वे** अपानात् पूर्वभाविनि व्यानेऽजोहवीत् लयं चिन्तितवान्। 'परत्वे' इत्यत्र भवितृप्रधाननिर्देशः ॥

**अथ** अनन्तरम् **त्रित्वे** त्रित्वसङ्ख्याविशिष्टेषु प्राणापानव्यानेषु **अथ** अनन्तरौ उदानसमानौ **हुत्वा** लीनै भवत इति चिन्तयित्वा **तत्** पूर्वोक्तं पञ्चत्वं पञ्चत्वसङ्ख्याविशिष्टं प्राणादिपञ्चकं **एकत्वे** एकत्वसङ्ख्याविशिष्टे मूलप्राणे लीनं भवतीति चिन्तितवान्। मुख्यप्राणो हृत्स्थितविष्णुरूपे लीनो भवतीति चिन्तितवान् ॥ तमात्मानं हृदि स्थितं विष्णुम् **अव्यये** नाशरहिते ब्रह्मणि सर्वगते विष्णुं अजोहवीत्। एकांशेन लीनो भवतीति चिन्तितवान्। **सर्वात्मना लये जीवसत्ताप्रदस्यैवाभावप्रसक्त्या एवं व्याख्येयमिति गुरुपादाः** ॥ अत्र एवं लयचिन्तनं कार्यमिति विधानार्थमेवानुवादः। अनिराकृतत्वात् ॥

तत्राद्यः पक्षस्तावत्प्रकृते न सम्भवति। अनिराकृतत्वात्। साक्षाद्भगवदवतारस्य कृष्णस्य प्रतिपत्तिर्निराकरणमर्हति चेत् कुतस्तर्हि व्यासप्रतिपत्तौ समाश्वासः। व्यासस्यापि भगवदवतारत्वात्। अतः अयुक्तं च निराकरण् ॥

ननु **'दध्यौ प्रसन्नकरणः'** इति पूर्वोक्तध्यानप्रकारस्यैव **'यत्तत्परं ज्योतिः'** इत्यादिनानुवादात्, ध्यानस्य च ज्ञानविषयविपरीतविषयकत्व-नियमात् कृष्णध्याने गुणानां स्वरूपत्वेन कथनेऽपि तेषां तटस्थत्वं

सम्भवति इति चेन्न । ज्ञानविपरीतं ध्यानमिति नास्ति नियमः । तथासति ध्यानस्य आरोपितप्रकारेणापि सम्भवात् ध्यानार्थिनः अज्ञानसंशयविपर्यय-परिहारप्रयोजनकश्रवणमननापेक्षा न स्यात् ॥

इदं च ध्यानस्य ज्ञानभिन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु जिज्ञासाधिकरणोक्तरीत्या ज्ञानविशेष एव ध्यानम् ॥ न च तटस्थं लक्षणं स्वरूपतया ध्यातव्यमिति विधिर्वा प्रयोजनं वा श्रूयते ॥

तस्माद् द्वितीयः पक्षः परिशिष्यते । तथा च सूत्रकारस्येदं मतमेव । अनुवादमात्रेणानभिमतत्वे श्वेतकेतूद्दालकाख्यायिकया प्रतिपादितत्वात् **'तत्त्वमसि'** इत्युक्तमद्वैतमपि श्रुत्यभिप्रायो न स्यात् । एवमेव ध्यानानुवादस्य अनभिमतविषयत्वे **'तद्वैतत् पश्यन् ऋषिः वामदेवः प्रतिपेदेऽहं ब्रह्मास्मि'** इत्यपि परोपासनानुवादो न स्वार्थे तात्पर्यवान् स्यात्, **'अथ योऽन्यां देवतामुपास्ते'** इत्युपासनाप्रकरणत्वात् । तथा च बहुविप्लवः स्यात् ॥ तस्मात्सूत्रकारस्यैवायमभिप्रायो यज्जगज्जन्मादिकारणत्वं ब्रह्मणः स्वरूपलक्षणमिति ॥ तथा च सुस्पष्टसूत्रकारीयवाक्यान्तरबलादपि सूत्रस्य स्वरूपलक्षणपरत्वमेवेति ॥

यत एवं जगज्जन्मादिकारणत्वं स्वलक्षणमत्र सूत्रे ब्रह्मणोऽभिधीयते । अतो न परमते अस्य सूत्रस्यारम्भ एवोपपद्यते ॥ लक्षणं हि सजातीय-विजातीयव्यवच्छेदार्थं भवति । यथाऽऽह **' समानासमानजातीयव्यवच्छेदो वा लक्षणार्थः'** इति ।**' सजातीयविजातीयव्यवच्छेदो हि लक्षणार्थः '** इत्यन्यत्रापि । तथा चानेन लक्षणेन चेतनत्वेन सजातीयाज्जीवात्, अचेतनत्वेन विजातीयाज्जडाच्च ब्रह्म व्यावर्तितं सूत्रकारेण । एवञ्च जीवस्यैव निराकरणसूत्रारम्भः कथं जीवैक्यवादिनां स्यात् । यदीदं लक्षणं कथञ्चित् तटस्थं स्यात् तर्हि परमते सूत्रारम्भः स्याद्वा । स्वरूपलक्षणमिति चोपपादितम् ॥

स्यादयमद्वैतवादिनामनुपपन्नो लक्षणारम्भो यदीदं लक्षणं जीवव्यावृत्त्यर्थमुक्तं स्यात् । लक्षणं जडमात्रव्यावृत्त्यर्थमिति व्याख्याने कथमैक्यवादिनां लक्षणसूत्रारम्भो अनुपपन्न इति चेदुच्यते । यत्र हि लक्षणं नास्ति तत्सर्वं तद्व्यावर्त्यमङ्गीकरणीयम् । अन्यथा लक्षणस्य अव्याप्ति-प्रसङ्गात् । व्यावर्त्यत्वाभावे लक्षणासत्वे च अव्याप्तेरवश्यम्भावात् ।। नचेदं जगज्जन्मादिकारणत्वलक्षणं जीवस्यास्ति । तत्कथमसौ जीवो अनेन लक्षणेन न व्यावर्त्यत इति ।।

किञ्च अनेन लक्षणेन यदि जीवो न व्यावर्त्यते तर्हि सोऽपि लक्ष्यान्तर्गतः स्यात् । तथासति लक्षणस्य जीवे अतिव्याप्तिमाशङ्क्य **'इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः'** इति सूत्रे जीवस्य स्वतन्त्रकर्तृत्वे हिताकरणमहितकरणं च न स्यात् इति सूत्रकारीयं जीवस्वातन्त्र्यनिराकरणमसङ्गतं स्यात् । नहि लक्ष्य एवातिव्याप्तिर्लक्षणस्य केनापि शङ्क्यते । कथञ्चिच्छङ्कायां वा तस्यापि लक्ष्यत्वा-ङ्गीकारेणातिव्याप्तिपरिहारं परित्यज्य तत्र लक्षणनिराकरणं न क्रियते । अतो अनेन लक्षणेन जीवो व्यावर्तित इति ज्ञायते ।।

यद्यपि परेणापि जीवस्य लक्षणव्यावर्त्यत्वमङ्गीकृतमेव । यथाऽऽह **'सर्वज्ञं सर्वशक्तिं विहायान्यतः परपरिकल्पितात् प्रधानादेरचेतनात्, चेतनादपि परिच्छिन्नज्ञानक्रियाशक्तेः संसारिणो हिरण्यगर्भादुत्पत्त्यादि न संभावयितुमपि शक्यते'** इति । तथाऽपि न्यायेनोपपादयितुमिद-मुक्तमिति ।।

इतोऽपि मायावादिनां न ब्रह्मलक्षणसूत्रारम्भः सम्भवति । लक्षणवाक्यं हि साक्षाल्लक्ष्यस्यासाधारणधर्मसंसर्गं प्रतिपादयत् सत् , अर्थादितरव्यावृत्तिं प्रतिपादयति । यथा 'सास्नादिमान् गौः' इति वाक्यं लक्ष्ये गवि सास्नादिमत्वरूपधर्मस्य सम्बन्धं साक्षात् प्रतिपादयत् सत् ,

अर्थात् गवि महिषादिव्यावृत्तिं प्रतिपादयति । ततोऽनेनापि लक्षणवाक्येन ब्रह्मणो जगज्जन्मादिकारणत्वसंसर्गः तदविनाभूतसर्वज्ञत्वादिगुणसंसर्गश्च प्रतिपादनीयः । तथा च निर्विशेषत्वानर्थान्तरनिर्गुणत्वं ब्रह्मणोऽनेन सूत्रेण निषिद्धम् । निर्विशेषत्ववादिनां च निर्विशेषत्वं निषेधतः सूत्रस्यारम्भः कथमुपपद्यत इति ॥

अत्राह मायावादी ॥ स्यादियं जीवब्रह्मणोरेकत्वं ब्रह्मणश्च निर्गुणत्वमङ्गीकुर्वतां लक्षणसूत्रारम्भानुपपत्तिः यद्यनेन सूत्रेण जगज्जन्मादि-कारणत्वं ब्रह्मणः स्वलक्षणमुच्यते । न चैवं किन्तु तल्लक्षणं तटस्थमेव । ब्रह्माश्रितमायागतमेव लक्षणं न तु ब्रह्मगतमिति भावः ॥

ननु **'स्वलक्षणैर्लक्षितभावनिर्वृतिम्'** इति स्वलक्षणत्वे प्रमाणमुक्तमिति चेन्मैवम् । 'स्वलक्षणैः' इत्यस्य 'स्वस्य लक्षणानि स्वलक्षणानि' इति वा । सु सम्यक् न लक्षणानि' इति वा अर्थोपपत्तेः । सम्यङ् न लक्षणानि इत्यस्यार्थः तटस्थलक्षणानीति ॥ यद्येवं तर्हि यतोऽस्य जन्मादि सा माया तदाश्रयो ब्रह्मेति निर्देशः स्यात् । न तु जन्माद्यस्य यतस्तद्ब्रह्मेति इति सिद्धान्तिना चोदिते पुनर्मायावादी आह । मैवम् ॥ 'यत्र घोषः सा गङ्गा' इतिवल्लक्षणया प्रयोगोपपत्तेरिति ॥ यथा 'सा गङ्गा' इति गङ्गापदं तीरं लक्षणया बोधयति तथा 'तद्ब्रह्म' इत्यत्र 'तत्'पदमिति लक्षणया मायाश्रयं ब्रह्म बोधयतीत्युपपत्तेरित्यर्थः ॥

पुनः सिद्धान्ती शङ्कते । तटस्थेनापि जगज्जन्मादिकारणत्वेन ब्रह्मणो जीवैक्यं निर्गुणत्वं च विरुद्ध्यते । काकनिलयनत्वं हि परेण तटस्थं लक्षणमुदाहृतम् । 'यत्र काकः तद्देवदत्तगृहम्' इत्युक्ते तस्य काकस्य लक्ष्यान्तर्भावे काकाधिकरणत्वमपि गृहशब्दार्थः स्यात् । ततश्च काकविगमे गृहस्य एकदेशः भग्नः इति बुद्धिः स्यात् । नैवं भवति । अतो न काको लक्ष्यान्तर्गत इति ॥ तत्र प्रष्टव्यं काकाधिकरणत्वं तदनधिकरणेभ्यो गृहं

व्यावर्तयति न वेति । नेति पक्षेऽनुभवविरोधः, तदभिधानवैयर्थ्यं च । व्यावर्तयतीति पक्षे ब्रह्मलक्षणं तटस्थमपि कथं न जीवव्यावृत्तिं करोति । कथं च तत्सम्बन्धेन सगुणं न भवतीति ॥

तत्र मायावादी एवं परिहारमाह । मैवं शङ्कनीम् । यो हि कार्यकारणसङ्घातात् अविविक्तं कर्तृत्वभोक्तृत्वदोषसंसर्गिणमात्मानं मत्वा मृषैव क्लिश्यति स जीवो अनेन लक्षणेन व्यावर्त्यत एव ॥ कार्यं देहेन्द्रियान्तःकरणादि । कारणम् अविद्यादोषो रागादिः । तेषां समूहात् विवेकाभावेन अहं कर्ता अहं भोक्ता इति मन्वानो व्यर्थं यः क्लेशमनुभवति स जीवो व्यावर्त्यत इति भावः ॥

तत्र देहादिविशिष्टान्तर्गतं विशेष्यांशरूपं चैतन्यं ब्रह्मणो न भिद्यत इत्यभ्युपगमे नास्ति विरोधः । न च सत्यस्य प्रपञ्चस्य कारणभूतायाः सत्याया आश्रयो ब्रह्मेति सूत्रार्थः । येन ब्रह्मणः सविशेषत्वं स्यात् । किन्तु यदधिष्ठानभूतः विश्वो कल्पितः तद् ब्रह्मेति सूत्रार्थः । मायाकल्पितप्रपञ्चारोपाधिष्टानं ब्रह्मेति भावः । सति चैवं सूत्रार्थे कथं जीवब्रह्मणोरेकत्वं ब्रह्मणो निर्गुणत्वं च विरुद्ध्यत इति ॥

एवं मायावादिना पूर्वपक्षिते सिद्धान्तिना उच्यते । आस्तां तावत् प्रपञ्चस्य विवर्ततादिवार्ता प्रमाणाभावात् प्रकृत्यधिकरणे निराकरिष्यमाणत्वाच्च । तटस्थेन जगज्जन्मादिकारणत्वेन अत्र सूत्रे लक्षणया ब्रह्म प्रतिपाद्यते इति कुतोऽङ्गीकरणीयम् । मुख्यार्थासम्भवे हि लक्षणाश्रयणं दृष्टम् । तत्र तावत् मुख्यार्थबाधकं वक्तव्यम् । तत् प्रत्यक्षम् , अनुमानम् , आगमोऽर्थापत्तिर्वा । न तावत् ब्रह्मणो जगज्जन्मादिकारणत्वस्य बाधकं प्रत्यक्षम् । तल्लक्षणस्य प्रत्यक्षागोचरत्वात् । नापि ब्रह्म न कर्तृ निष्क्रियत्वात् इत्याद्यनुमानम् । श्रुतिबाधितत्वात् । नापि **'निष्कलं निष्क्रियम्'** इत्याद्यागमः । तस्य षोडशकलारहितत्वअक्लिष्टकारित्वाभिप्रायात्

सावकाशत्वात् । अत्र **'अकर्माऽक्लिष्टकारित्वात्'** इत्यादि दशमतात्पर्योक्तं मानम् । अतः अर्थापत्तिर्वक्तव्या ॥

मायावाद्युपन्यस्ताऽर्थापत्तिरित्थम् ।जीवब्रह्मणोरेकत्वं तावदवश्यकम् । न च जगज्जन्मादिकारणत्वस्य स्वलक्षणत्वे तत्सम्भवति । अतो जीव-ब्रह्मैक्यान्यथाऽनुपपत्त्या मायागतमेवेदं लक्षणम् । जन्माद्यस्य यतः तद् ब्रह्मेति लक्षणया उच्यत इति कल्प्यत इति ॥

अत्रोत्तरम् । यदि जीवब्रह्मैक्यपरिरक्षणाय यथाश्रुतं सूत्रार्थं परित्यज्य लक्षणाऽऽश्रीयते इति मतं तर्हि जीवब्रह्मणोर्भेदाङ्गीकारेणैव सूत्रस्य मुख्यार्थसम्भवे कुतो लक्षणाऽऽश्रयणीया ॥

नन्वेवमभेदमुपादाय सूत्रे लक्षणा वाऽऽश्रयणीया , भेदमुपादाय मुख्यवृत्तिर्वा इति सन्दिह्यते विनिगमकाभावादिति चेन्न । द्वितीयः पक्ष एव श्रेयान्, अप्रामाणिकत्वात् जीवब्रह्मणोरेकत्वस्य । नहि अप्रामाणिक-परिरक्षणाय वाक्यानाममुख्यवृत्त्याश्रयणं क्वचिदुपलब्धमिति ॥

ननु कथं जीवब्रह्मैक्यस्याप्रमाणिकत्वम् ? **'तत्त्वमसि'** इत्यादिश्रुतिसिद्धत्वादिति चेन्न । उपपत्तिपराहतत्वात् । तथा हि तच्छब्दस्य मुख्यार्थः परमात्मा । स च **'सदेव सोम्य'** इत्यादिना प्रकृतः , प्रेक्षापूर्वं तेजोऽबन्नादीनां स्रष्टा, सर्वासां प्रजानां मूलमायतनं प्रतिष्ठा च, सकलावद्यगन्धविधुरः , अपरिच्छिन्नगुणाकरः ॥ त्वंपदस्य मुख्यार्थः जीवः । स च प्रत्यक्षसिद्धः , अल्पशक्तिः, पराधीनः , दोषकलुषितः, अवच्छिन्न - ज्ञानादिगुणः ॥

(अत्र **'सदेव सोम्य'** इत्यादेः प्रतियोगित्वेन प्रत्यक्षसिद्ध इति **'प्रेक्षापूर्वम्'** इत्यादेः अल्पशक्तिरिति, **'सर्वासाम् '** इत्यादेः पराधीन इति, **'सकल'** इत्यस्य दोषकलुषित इति, **'अपरिच्छिन्न'** इत्यस्य अवच्छिन्नेति विवेकः)

एतौ मुख्यार्थावादाय अनेन वाक्यैनैक्यमुच्यते वा, विरुद्धभागत्यागेन लक्षणया वा ? नाद्यः । परस्परविरोधेन योग्यताविरहे जरद्गवादि-वाक्यवदाभासत्वप्रसङ्गात् । न द्वितीयः । 'सिंहो देवदत्तः' इत्यादिवत् सामानाधिकरण्यमात्रं गौणमुपादाय जीवब्रह्मणोर्भेदेनैवाङ्गीकृतेन । पदद्वयस्य मुख्यार्थसम्भवे जहदजहल्लक्षणा कुत आश्रयणीयेति ॥

अस्याभिप्रायः । सिंहो देवदत्त इत्यत्र सिंहपदस्य गौणीवृत्याश्रयणेन सिंहसदृश इति यथा अर्थो बोध्यः एवं 'तत्त्वमसि' इत्यत्रापि तत्पदस्य गौण्यावृत्त्या तत्सदृश इत्यर्थाङ्गीकारे मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्मभेदस्य जीवेऽसत्त्वेऽपि अमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात् सामानाधिकरण्येनामुख्याभेदलाभः । परमते पदद्वये लक्षणा । अस्मन्मते तु तत्पदमात्रे गौणी । तत्राल्पबाधेनैवोपपत्तौ बहुबाधोऽन्याप्य इति भावः । एवं गौणीवृत्त्यपेक्षया लक्षणावृत्तेर्जघन्यत्वमपि द्रष्टव्यम् ॥

ननु किं सामानाधिकरण्यं मुख्यमुपादाय तत्त्वंपदयोर्लाक्षणिकत्वं व्याख्येयम् । किं वा सामानाधिकरण्यं गौणं गृहीत्वा तत्त्वंपदयोर्मुख्यार्थता व्याख्यातव्येति सन्देहे विनिगमकं नास्तीति न । **'त्यजेदेकं कुलस्यार्थे'** इति न्यायस्य विद्यमानत्वात् । यथा (प्रयोजनका) प्रामाणिकानेकपरिरक्षणाय अप्रयोजनकस्यैकस्य परित्यागस्तथा प्रामाणिकभेदपरिरक्षणाय सामानाधिकरण्यं गौणमङ्गीकृत्य 'तत्'*'त्वं'पदयोर्मुख्यार्थता व्याख्यातव्येति विनिगमनमस्तीति भावः ॥

इदमुपलक्षणम् । प्रत्यक्षापेक्षया प्रातिपदिकस्य प्राधान्यमपि विनिगमकं द्रष्टव्यम् । प्रातिपदिके लक्षणाङ्गीकारात् प्रत्यक्षे गौणाङ्गीकारो वर इति भावः ॥

न चैक्य एव तात्पर्यलिङ्गानामानुगुण्येन तस्यैव प्रामाणिकत्वात्

तत्परिरक्षणाय वैपरीत्यं कुतो न व्याख्येयमिति चेत् तात्पर्यलिङ्गानां भेद एवानुगुण्यं प्रकृत्यधिकरणे पृथगधिकरणे च व्युत्पादयिष्यते ।।

किञ्च विरोध्याकारपरित्यागेन स्वरूपमात्रलक्षणया 'तत्त्वमसि' इति वाक्यं जीवब्रह्मणोरैक्यं प्रतिपादयतीति वदन् प्रष्टव्यः । विरोध्याकार-परित्यागो नाम किम् अविवक्षामात्रमुत विरोध्याकारस्यानित्यत्वम् । न प्रथमः । **'सत्यत्वात्तेन दुःखादेः'** इति जिज्ञासाधिकरणे उक्तत्वात् । दुःखादेः सत्यत्वेन अनुभूयमानत्वात्, स नास्तीति विवक्षामात्रेण तस्य असत्वेऽङ्गीकृते वह्निरपि अनुष्ण इति विवक्षामात्रेण न दहेदित्यतिप्रसङ्गः । न द्वितीयः । सोऽयं देवदत्त इत्यत्र तद्देशकालविशिष्टैतद्देशकाल-विशिष्टयोरैक्यायोगात् विरोध्याकारपरित्यागेनैक्यं बोधयितुं शक्यं कथञ्चित्, तदेतद्देशकालसम्बन्धयोरनित्यत्वात् । नित्यगुणस्य ईश्वरस्य नित्य-पारतन्त्र्यादिदोषवता जीवेन गुणत्यागतः कथमैक्यं स्यात् । **'ज्ञानं नित्यं क्रिया नित्या'** इति लिङ्गपादे साधयिष्यते ।।

**'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।**
**उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ।।**
**स्वाभाविकं ययोरेतन्नान्यथा तु कथञ्चन ।**
**वदन्ति शाश्वतावेतावत एव महाजनाः'** इति विष्णुपुराणे ।।

ननु विरोध्याकारपरित्यगेन जीवस्य ब्रह्मैक्यम् इत्यस्यार्थः न विकल्पितद्वयमपि । अपि तु निर्गुणेन ब्रह्मणा जीवस्यैक्यमिति चेन्न । निर्गुणत्वस्यैव निरूपयितुमशक्यत्वात् । तथाहि तन्निर्गुणं किं सगुणाद् ईश्वरात् भिन्नमुताभिन्नम् । द्वितीये तस्यापि सगुणत्वप्रसङ्गेन निर्गुणत्व-व्याघातः । आद्ये सगुणस्य नित्यं सगुणत्वात् तस्मान्नित्यनेन निर्गुणं भिन्नं स्यात् । तथा च न कदाचिदपि अद्वितीयब्रह्मभावरूपमोक्षः स्यात् ।।

मायावादी शङ्कते ।। ननु स्वभावतो निर्गुणमेवारोपितैर्मिथ्यागुणैः सगुणमिति विशेषाभिज्ञैरभिलप्यते । यथा स्वरूपतः नीरूपमपि गगनमज्ञानिभिः आरोपितनीलिम्ना नीलत्वेन । आरोपप्रवाहस्य चानादि-नित्यतया सदा सगुणत्वं च नानिष्टम् । तथा च मिथ्याभूतविरोध्याकार परित्यागेनैक्योपदेशोऽपि नानुपपन्नः । यथाऽऽरोपितनीलाकारपरित्यागेन नीरूपं गगनमिति । यथा वा यदिदं रजतमिति मतं सा शुक्तिरित्येवं यदिदमज्ञैः सगुणमिति मतं तन्निर्गुणमिति ।।

एवं वदन् प्रष्टव्यः । मिथ्येत्यसदुच्यतेऽजिर्वचनीयं वा । नाद्यः । अनङ्गीकारात् । नहि मायावादी ब्रह्मगुणा असन्त इति अङ्गीकरोति । न द्वितीयः । अनिर्वाच्यस्य जिज्ञासाधिकरणे निराकृतत्वात् । अतो गुण-राहित्यलक्षणं निर्गुणत्वं न सर्वथा शक्यनिरूपणम् ।।

अत्र गुणराहित्यलक्षणं निर्गुणत्वं न वैशेषिकपरिभाषितगुणशून्यत्वम् । येन वैशेषिकाः गुणादिपञ्चकस्य निर्गुणत्वं मन्यन्ते इति शङ्का समुदेति । किन्तु अद्वैतिना निर्गुणं निरूपयितुमशक्यमिति । गुणशब्देनात्र धर्ममात्रं प्रकृतम् । तद् गुणादिष्वपि सर्वसम्मतम् । यथा परिभाषिकचतुर्विंशति-गुणराहित्यमपि न तथा वैशेषिकाधिकरणे वक्ष्यते ।।

ननु **'साक्षी चेता केवलो निर्गुणश्च'** इति निर्गुणं ब्रह्म श्रूयते । मैवम् । निर्गुणस्यैव निरूपयितुमशक्यत्वात् इत्यादिनोक्तानुपपत्तिपराहतत्वेन अर्थान्तरपरत्वात् । प्राकृतगुणराहित्यं हि तदर्थान्तरम् । निर्गुणशब्देन धर्मसामान्यनिषेधे साक्षित्वादिनामपि धर्मत्वाद् व्याघातश्च । साक्षाद् द्रष्टा हि साक्षी । यथाऽह पाणिनिः **'साक्षाद् द्रष्टरि सञ्ज्ञायाम्'** इति । 'साक्षात्' इत्यव्ययात् द्रष्टृर्थे सञ्ज्ञायां विषये इनिप्रत्यये **'अव्ययानां भमात्रे टिलोपः'** इति टेर्लोपे 'साक्षी' इति रूपसिद्धिः ।।

यद्येवं निराकृतमपि धर्मराहित्यलक्षणं निर्गुणत्वमाग्रहमात्रेण

योऽङ्गीकरोति तदा तस्य गुणशब्दोदितसकलशुभराहित्यलक्षणमासुरत्वमेव स्यात् । मायावादी असुर इत्यभिप्रायः ॥

मायावादी यद् वदति 'न हि नानाविधकार्यं क्रियावेशात्मत्वं तत्प्रसवशक्त्यात्मकं वा जिज्ञास्यविशुद्धब्रह्मान्तर्गतं भवितुमर्हति' इति तदप्येतेन निरस्तं वेदितव्यम् । नानाविधकार्यगोचरक्रियाश्रयत्वं वा नानाविधकार्यजननशक्तिर्वा जिज्ञास्यस्य विशुद्धस्य ब्रह्मणो नास्ति । तस्य निर्गुणत्वात् । अतः लक्षणं तटस्थमिति तस्याभिप्रायः । निर्गुणत्वस्यैव निरस्तत्वात् नेदमपि शोभनमिति भावः ॥

गुणगुणिनोः परस्परमन्यत्वे कश्चन सम्बन्धो वक्तव्यः । तत्र सम्बन्ध-सम्बन्धिनोः सम्बन्धान्तरेण भाव्यम् । तत्राप्येवमित्यनवस्थानात्, अन्यत्वे सम्बन्धसम्बन्धित्वव्याघातात् अनिरूपणम् । अतो लक्षणस्य तटस्थत्वमिति मायावादिनो मन्यन्ते ॥ अयमत्र तेषामभिप्रायः । ब्रह्मणो लक्षणं गुणपूर्णत्वं तत्सम्भावकतया जगज्जन्मादिकर्तृत्वं नाभिहितम् । तदुभयमपि लक्षणं लक्ष्याद् ब्रह्मणो भिन्नमभिन्नं भिन्नाभिन्नं वा । नाद्यः । अत्यन्तभिन्नयोः द्वयोः मेरुमन्दरवत् लक्ष्यलक्षणभावस्य गुणगुणिभावस्य चानुपपत्तेः । सम्बन्धसद्भावात् नैवमिति चेन्न । सम्बन्धस्यापि सम्बन्धिभ्याम् अन्यत्वा-नन्यत्वाभ्यामनिरूपणात् ॥

न द्वितीयः । अनेकगुणैरभिन्नस्य ब्रह्मणोऽप्यनेकत्वापत्तेः । तथा च **'एकमेवाद्वितीयं ब्रह्म'** इति श्रुतिविरोधः । एकब्रह्मणाऽभेदेन लक्षणानां वा एकत्वापत्तिः । तथा च **'यतो वा इमानि भूतानि जायन्ते'** इत्येवमादिश्रुतेः पुनरुक्तिदोषप्रसङ्गः ॥ सृष्टिकर्तृत्वादिलक्षणानाम् एकब्रह्मभिन्नानाम् एकत्वापत्त्या एकेनोक्तेन द्वितीयस्य पुनरुक्ततेति भावः । किञ्च लक्ष्यलक्षणयोरभिन्नत्वे लक्ष्यलक्षणभावो वा गुणगुणिभावो वा नोपपद्यते । प्रसिद्धेन हि अप्रसिद्धं लक्षणीयम् । न च स्वयं प्रसिद्धमप्रसिद्धं चेति

युज्यते। गुणी च गुणवान् भवति । न च स्वयं तद्वान् भवति । न तृतीयः । परस्परविरोधात् । अतोऽशक्यनिरूपणत्वान्नेदं ब्रह्मस्वरूपान्तर्गतं लक्षणं किन्तु तटस्थमेव । न च तटस्थेन लक्षणेन ब्रह्मणोऽद्वितीयत्वभङ्गः । यद्रजतमित्यभात् सा शुक्तिरितिवत् यज्जगज्जन्मादिकारणत्वेन प्रतीतं तद् ब्रह्म इत्येवं रूपेण मिथ्याभूतकारणत्वेनोपलक्षणसम्भवात् इति ॥

एवं मायावादिना विकल्प्य दूषिते सिद्धान्तिना एवं वक्तव्यम् । यदेवं पृष्ट्वा लक्षणं दूषयसि तदा ऐक्यस्य निरूपणप्रकारो न विद्यते । अयमभिप्रायः । द्विविधं हि वाक्यं मायावादिना तत्त्वावेदकमङ्गीकृतम् । एकं जीवब्रह्मयोरैक्यपरं महावाक्यम् । यथा 'तत्त्वमसि' इत्यादि । अपरं तत्स्वरूपपरमवान्तरवाक्यम् । यथा **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादि । तदुभयमपि सविशेषाभिन्नवस्तुनिष्ठं परेणाङ्गीकरणीयम् । गत्यन्तराभावात् । एवमेव भगवद्धर्माणां जगज्जन्मादिकारणत्वादीनां भगवतो भेदाभावेऽपि विशेषस्य सद्भावात् तद्बलेन गुणगुणिभावादिकं सर्वमुपपद्यते इति ॥

उभयविधवाक्यानां गत्यन्तरं नास्तीत्युपपादयितुमुत्तरो ग्रन्थः । तत्र तावदाद्यस्य तत्त्वमसीत्यादिवाक्यस्य गत्यन्तरं नास्ति । कथमिति चेदुच्यते। 'तत्वमसि' इत्यादिवाक्यप्रतिपाद्यमैक्यं 'किं तत्' इति पदेन लक्षितात् चैतन्यादभिन्नमुत भिन्नमथ भिन्नाभिन्नमिति वाच्यम् । चैतन्यादभिन्नमिति प्रथमो न युक्तः । एवमङ्गीक्रियमाणे ऐक्यं 'तत्त्वमसि' इत्यादिना शास्त्रेण प्रतिपाद्यं न स्यात् । कुतः ? स्वरूपस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् । तन्मात्रस्वरूपत्वाच्चैक्यस्य । न हि स्वयं प्रकाशमानमेव शास्त्रप्रतिपाद्यम् । सिद्धार्थप्रतिपादकत्वेन वैयर्थ्यप्रसङ्गात् ॥ किञ्च परेण स्वप्रकाशत्वं नाम अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वमङ्गीकृतम् । तथा च अवेद्यत्वं स्वयमङ्गीकृत्य पुनः स्वप्रकाशचैतन्यात्मकं शास्त्रप्रतिपाद्यमित्यङ्गीकारे व्याहतिः ॥

अथ शास्त्रं नैक्यं प्रतिपादयति किन्तु भेदभ्रमं निराकरोति । यथोक्तं मायावादिभिः **'सिद्धं तु निवर्तकत्वात्'** इति । ऐक्यस्य स्वप्रकाशात्मस्वरूपत्वेन सदा प्रकाशमानत्वेऽपि शास्त्रस्योपादेयत्वं सिद्धमेव । शास्त्रस्य भेदभ्रमनिवर्तकत्वादिति तदर्थः इति चेन्न । ऐक्ये प्रकाशमाने भेदभ्रमस्यैवानवकाशात् । तत्त्वाप्रतिपत्तिरेव भ्रान्तिहेतुर्लोके दृष्टा । तत्त्वस्य प्रकाशमानत्वे कथं भ्रमावकाशः ? ऐक्यं न प्रकाशत इति चेन्न । ऐक्यस्य स्वप्रकाशचैतन्यमात्रत्वे चैतन्यप्रकाशेऽपि ऐक्याप्रकाशस्य विरुद्धत्वात् । अविद्यावशात् चैतन्यस्वरूपयाप्यनवभास इति चेन्न । आत्मनोऽपि तत एवानवभासप्रसङ्गात् । अस्त्विति चेन्न । अधिष्ठानभूतात्मानवभासे अविद्यारोपस्याप्यनुपपत्तेः । तथा चाविद्यावशादैक्यानवभासोक्तिरयुक्ता स्यात् । अविद्याया एवानुपपत्तेः ॥

ननु आत्मस्वरूपांशेऽविद्यावरणं नास्ति किन्तु ऐक्यांश एवेति चेन्न । अखण्डे वस्तुनि अंशतोऽविद्यावरणासम्भवात् । असम्भवनीयावभासचतुराऽविद्येति चेत् तर्हि एवं विधाविद्या जडेष्वेव कुतो नाङ्गीकार्या ? अधिष्ठानानवभासे कथमविद्यारोप इति आक्षेपस्य असम्भवनीयावभासचतुराऽविद्येति परिहारस्य च तुल्यत्वात् । तथा च **'सा (अविद्या) न चडेषु वस्तुषु'** इति मायावादिनोक्तमयुक्तं स्यात् ॥

न केवलमैक्यं शास्त्राप्रतिपाद्यम् । किन्तु ऐक्यस्य शास्त्रप्रतिपाद्यत्वाङ्गीकारेऽपि तत्पदेनैव तत्पदप्रतिपाद्यचैतन्याभिन्नैक्यस्य प्रतिपादितत्वात् 'त्वमसि' इति व्यर्थं स्यात् । 'तत्' इत्येतावता न भेदभ्रमनिवृत्तिः । अतः 'त्वमसि' इति सार्थकमिति चेन्न । तत्पदेनैक्यस्य प्रतिपादितत्वात् ऐक्यप्रतीतौ च भेदभ्रमस्य निरस्तत्वात् । ऐक्यप्रतीतावपि भेदभ्रमानिरासे न कदापि निवृत्तिः स्यात् ॥

किञ्च तत्पदेन ऐक्यस्याप्रतिपादितत्वे तत्पदेन प्रतिपाद्यस्य

सार्वज्ञाद्युपलक्षितस्य चैतन्यस्य स्वरूपत्वमैक्यस्य नोपपद्यते ॥

ननु कथं तर्हि 'सोऽयं देवदत्तः' इति वाक्यम्। तस्मिन् वाक्ये 'सः' इति तत्पदेनैव देवदत्तस्वरूपस्य तदभिन्नस्यैक्यस्य च बोधितत्वेन 'अयं' 'देवदत्तः' इति पदयोः वैयर्थ्यापत्तेरिति । अत्रापि ऐक्यस्य देवदत्तस्य च सविशेष-भेदानङ्गीकारे अनुपपत्तिरेव । वयं तु सविशेषाभेदमङ्गीकृत्यानुपपत्तिं परिहराम इति भावः ॥

एवमैक्यं चैतन्यादभिन्नमिति पक्षो निराकृतः । इदानीं ऐक्यं चैतन्याद् भिन्नमिति द्वितीयः पक्षः निराक्रियते । ऐक्यस्य स्वरूपाद्भेदेऽङ्गीक्रियमाणे अपसिद्धान्तः । मायावादिना तत्त्वमसीत्यादिवाक्यस्य निर्भेदार्थ निष्ठत्वरूपाखण्डार्थनिष्ठाया अङ्गीकृतत्वात् ब्रह्मस्वरूपभिन्नैक्यरूपार्थ-प्रतिपादकत्वाङ्गीकारे उक्तरूपाखण्डार्थत्वहानिरिति भावः ॥

मिथ्यात्वप्रसङ्गोऽपरो दोषः । मायावादिभिः चैतन्यातिरिक्तस्य सर्वस्य मिथ्यात्वाङ्गीकारात् ऐक्यं चैतन्यातिरिक्तं चेन्मिथ्या स्यात् । अन्यथा तेनैव सत्येनाऽद्वैतव्याघातात् । ऐक्यमिथ्यात्वे को दोष इति चेत् मिथ्यात्वात् तत् शास्त्रेण ज्ञेयं न स्यात् । मिथ्याभूतस्य शास्त्रेण ज्ञेयत्वे तत्त्वमस्यादि-शास्त्रस्यातत्त्वावेदकत्वं स्यात् ॥

किञ्च जीवब्रह्मणोरैक्यस्य मिथ्यात्वे तद्भेदसत्यत्वमपि स्यात् । कुतः ? व्याप्तिबलात् । कुत्रापि सत्यो भेदो मायावादिभिनाङ्गीकृतः । तत्कथं व्याप्तिरिति चेत् आस्तां तावत् परमार्थचिन्ता । व्यावहारिक-पारमार्थिकत्वविभागस्याद्याप्यसिद्धत्वात् अर्थक्रियाकारित्वरूपव्यावहारिक-त्वेन मायावाद्यभ्युपेतस्य सत्यस्येव तत एव पारमार्थिकतया अस्माभिः अभ्युपेतस्य सत्यस्य व्याप्तिः सुखदर्शनीया । ययोर्दूरस्थयोः वनस्पत्योरैक्यं मिथ्या तयोर्भेदः सत्य इति दृष्टत्वात् ॥ अथवा सामान्यव्याप्तिः प्रदर्श्यते । यस्य स्वरूपेण सतः योऽभावो मिथ्या तस्य तद्विपरीतः सत्यः यथा ब्रह्मणो

अनृतत्वादेः सत्यत्वाद्यभावरूपस्य मिथ्यात्वे सत्यत्वादिकं सत्यमिति । एवं च जीवब्रह्मणोः ऐक्यस्य भेदाभावरूपस्य मिथ्यात्वे भेदः सत्यं स्यादिति प्रसङ्गोपपत्तिः । यथाहुः **'परस्परविरोधे तु न प्रकारान्तरस्थितिः'** इति । परस्परविरुद्धयोः अन्यतरस्थितिं विना प्रकारान्तरेण स्थितिर्नेत्यर्थः । तथा च विरुद्धयोरन्यतरस्य मिथ्यात्वेऽन्यतरस्य सत्यत्वं स्यादेवेति भावः ॥

इदानीमैक्यं चैतन्यस्वरूपाद्भिन्नाभिन्नमिति तृतीयः पक्षो निरस्यते । जीवब्रह्मणोरैक्यस्य स्वरूपाद्भेदाभेदौ यद्यङ्गीक्रियेते तदा वक्तव्यं तौ भेदाभेदौ किं चैतन्यादभिन्नावुत भिन्नवथ भिन्नाभिन्नाविति । आद्ये चैतन्यस्यापि द्वित्वं भेदाभेदयोर्वैकत्वं तच्छब्दपर्यायत्वम् अन्यतरमात्र-परिशेषापत्तिश्च स्यात् । यदि भिन्नौ अथवा भिन्नाभिन्नौ तर्हि स्पष्टमनवस्था स्यात् । तथाहि । स भेदः (चैतन्य-भेदाभेदयोः भेदः) किं भेदिभ्यां(चैतन्य-भेदाभेदरूपभेदिभ्यां) भिन्नोऽभिन्नो भिन्नाभिन्नो वा । यदि भेदो भेदिभ्यां भिन्नः सोऽपि भेदस्तथेत्यवस्था । यदि भेदो भेदिभ्यामभिन्नः तर्हि पूर्ववत् चेतन्य-भेदाभेदशब्दानां पर्यायत्वं, चैतन्याद्यन्यतरपरिशेषत्वं, भेदाभेदयोरेकत्वं, भेदस्यानेकत्वमिति दोषाः स्युः। भेदो भेदिभ्यां भिन्नाभिन्न इति तृतीयः पक्षः ऐक्यं चैतन्याद्भिन्नाभिन्नमिति पक्षेऽन्तर्भवति । तथा च तद्दोषेणैव दुष्टो भवति । भेदाभेदपक्षाङ्गीकारे भेदपक्षदोषः अभेदपक्षदोषः व्याहतिश्च स्यादिति स्फुटत्वान्नोक्तः । तर्हि सिद्धान्तिभिः गुणगुणिनोः क्रियाक्रियावतोः अवयवावयविनोः कथं भेदाभेदाङ्गीकार इति चेत् अनुभवानुसारेण तत्राङ्गीकारः । स्पष्टमिदं तत्वविवेकटीकादाविति ॥

ननु भेदस्य भेदान्तरं, भेदाभेदयोश्च भेदाभेदान्तरमित्येतावता नानवस्था । उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावादिति चेन्न । चैतन्यादैक्यं भिन्नमिति भिन्नाभिन्नमिति वा विशिष्टप्रतीतिर्हि विशेषणत्वेन भेदभानं भेदाभेदभानं वाऽपेक्षते । विशेषणत्वेन तद्भानं च विशेषणभूतभेदस्य

भेदाभेदस्य वा विशेष्यभूतैक्यात् भेदस्य वा भेदाभेदस्य वा भानाभाव अनुपपन्नम् । तद्भानमपि विशेषणत्वेन तज्ज्ञानं विना नोपपन्नमित्येवम् उत्तरोत्तरभेदादिभानं विना पूर्वपूर्वभेदादिभानं न युक्तमिति भवत्येव ज्ञप्तिप्रतिबन्धक इति दोष एव ॥

मायावादी पुनः शङ्कते । ननु ऐक्यं चैतन्याभिन्नमपि स्वनिर्वाहकत्वात् स्वाभाविकप्रकाशेनाप्रकाशितत्वमात्मनो निर्वहिष्यति । यद्वा स्वरूपेणैक्यस्य भेदाभेदौ स्याताम् । तयोश्च भेदाभेदान्तराभावेऽपि स्वनिर्वाहकत्वात् भिन्नाभिन्नमैक्यं चैतन्यादित्यादिविशिष्टव्यवहारोपपत्तिरिति ॥

नेदमपि साधु । विशेषानभ्युपगमे स्वनिर्वाहकत्वस्यापि वक्तुमशक्यत्वात् । तथाहि ऐक्यस्य भेदाभेदयोर्वा स्वनिर्वाहकत्वं यद्यङ्गीकृता स्यात् , तर्हि स्वयं स्वस्य निर्वाहकमित्युक्तं स्यात् । तथाचैकस्यैव एकस्यामेव निर्वाहक्रियायां कर्मकर्तृत्वलक्षणं निर्वाह्यत्वं निर्वाहकत्वं चेत्युक्तं भवति । तन्निर्वाह्यत्वं निर्वाहकत्वं परस्परं, धर्मिणा क्रियया च अत्यन्ताभिन्नं वा भिन्नं वा ? आद्ये निर्वाह्यमिति निर्वाहकमिति निर्वहणमित्यपि शब्दसमूहः पर्यायः प्रसज्येत । एकार्थत्वात् । न च तेषां पर्यायत्वं कश्चिन्मनुते । द्वितीये परस्परभेदस्य धर्मिणा भेदस्य च भेदिस्वरूपमात्रत्वे पर्यायतदन्यतरपरिशेषत्वरूपदोषापातात् । तत् भेदद्वयं भेदिभ्यां भेदान्तरविदत्यङ्गीकरणीयम् । तत्रापि तथेति परस्परभेदपरम्परा वा धर्मिपरम्परा वा निर्मूलैव भवतीति उभयानवस्था स्यात् इति ॥

एवं विशेषानभ्युपगमे तत्त्वमसीत्यादिमहावाक्यानुपपत्तिः प्रदर्शिता । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिकेऽवान्तरवाक्येऽपि एवं विकल्प्य दूषणमभिधानीयम् । तथा हि सत्यज्ञानादिकं परस्परं ब्रह्मणा चात्यन्ताभिन्नं वा भिन्नं वा भिन्नाभिन्नं वा । नाद्यः । तथा सति स्वप्रकाशब्रह्मात्मकस्य सत्यज्ञानादेः शास्त्राप्रतिपाद्यत्वप्रसङ्गात् । सत्यज्ञानादिपदानां

पर्यायत्वापत्त्या सहप्रयोगानुपपत्तिप्रसङ्गाच्च । न द्वितीयः । अपसिद्धान्तात् । ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वाङ्गीकारात् मिथ्याभूतसत्यत्वादि-प्रदिपादकस्य शास्त्रस्य अतत्त्वावेदकत्वप्रसङ्गाच्च । ज्ञानादीनां मिथ्यात्वे अज्ञानादीनां सत्यत्वप्रसङ्गाच्च । न तृतीयः पूर्ववत् अनवस्थाप्रसङ्गत् । स्व - निर्वाहकत्वस्य च विशेषानङ्गीकारे उक्तविधया निर्वक्तुमशक्यत्वात् इति ॥

मायावादी पुनः शङ्कते । ननु सत्यज्ञानादीनां परस्परं ब्रह्मणा च अत्यन्ताभेद एव । न च तावता सत्यज्ञानादिपदानां पर्यायत्वम् । वाच्यार्थ-भेदसद्भावात् । सत्यपदं सत्तारूपपरसामान्यवाचि । ज्ञानानन्दपदे ज्ञानत्वानन्दत्वरूपापरसामान्यवाचिनी । **'जातावेव शक्तिः'** इति भाट्टमता-नुसारेणेदमुक्तम् । **'जातिविशिष्टा व्यक्तयो वाच्याः'** सति तार्किकमता-नुसारेण सत्यत्वादिविशिष्टब्रह्मवाचिन एते शब्दाः । एवं परापरसामान्य-वाचिनां सगुणब्रह्मवाचिनां वा सत्यादिपदानां परब्रह्मणि लक्षणया प्रवृत्त्यङ्गीकारात् ॥

न च वाच्यं सत्यपदेन लक्षितस्यैव ज्ञानपदेन लक्षणायां वैयर्थ्यम् । अधिकलक्षणायां च नाखण्डार्थसिद्धिरिति । लक्ष्यार्थभेदाभावेऽपि आरोपितासत्यत्वादिव्यावृत्त्यर्थत्वेन पदान्तराणां सप्रयोजनत्वात् । अत एव न शास्त्रवैयर्थ्यम् । ब्रह्मस्वरूपे स्वप्रकाशेऽपि ब्रह्म असत्यं न अज्ञानं न, परिच्छिन्नं नेत्याद्यर्थकत्वेन आरोपितासत्यत्वाद्याकारव्यावृत्त्यर्थत्वेन **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादिशास्त्रस्य सप्रयोजनवत्त्वात् इति ॥

अत्रायमुत्तरक्रमः । किं ब्रह्मविशेषणत्वेन असत्यत्वादिव्यावृत्तिबोधः प्रयोजनमुच्यते । किं वा स्वतन्त्र एव व्यावृत्तिबोधः इति प्रष्टव्यम् । नाद्यः । ब्रह्मविशेषणत्वेन असत्वादिव्यावृत्तिज्ञानं प्रयोजनं सत्यादिपदानामिति मायावादिना वक्तुमशक्यते । कुत इति चेत् व्यावृत्ततया प्रतीतस्य ब्रह्मणोऽविशेषत्वात् । असत्यत्वादिरूपाभावविशेषाङ्गीकारे सत्यत्वादि-

भावविशेषैः किमपराद्धम् ?

न द्वितीयः । व्यावृत्तेर्व्यावृत्तस्य ब्रह्मणोऽविशेषत्वे या स्वतन्त्रा व्यावृत्तिः न प्रयोजनम् । तादृशव्यावृत्तिबोधः निष्प्रयोजन इति भावः । कुत इति चेत् मुमुक्षुणा ब्रह्म वा तद्धर्मो वा जिज्ञासितव्यः । तत्र व्यावृत्तिर्न ब्रह्म । ब्रह्मणो भावरूपत्वात् व्यावृत्तेरभावरूपत्वात् । ब्रह्मण एकत्वात्, व्यावृत्तीनाम् अनेकत्वात्, ब्रह्मणोऽन्यानिरूपितत्वरूपनिरुपाधिकत्वात्, व्यावृत्तेः प्रतियोगिनिरूप्यत्वेन सोपाधिकत्वात् । ब्रह्मधर्मोऽपि न चेत्कथं मुमुक्षुणा जिज्ञास्येत । एवम् अजिज्ञासितं चेत् तद्बोधनं कथं प्रयोजनं स्यादिति ॥

किञ्च सत्यादिपदानि ब्रह्मणि किं सत्यत्वादिधर्मान् अभिदधानानि असत्यत्वादिव्यावृत्तिप्रयोजनकानि उतान्यथा वा । नाद्यः । व्यावृत्तस्य ब्रह्मणोऽविशेषत्वेऽङ्गीकृते सति, विशेषाभिधानमुखेन व्यावृत्तिः पदानां प्रयोजनमिति वक्तुं न शक्यते इति ॥ न द्वितीयः । व्यावृत्तस्य ब्रह्मणोऽविशेषत्वे सत्यत्वादिधर्माः सत्यादिपदैः ब्रह्मणि न प्रतिपाद्यन्ते इति स्यात् । तदा असत्यत्वादिव्यावृत्तिः सत्यादिपदानां प्रयोजनमिति वक्तुं न शक्यते । यथा नदीपदलक्ष्यार्थे तीरे नदीत्वाभावेन नदीपदस्य तीरेऽनदीत्व-व्यावृत्तिबोधकत्वं नास्ति तथा सत्यादिपदलक्ष्यार्थे ब्रह्मणि सत्यत्वा-द्यर्पणाभावेन सत्यादिपदानां ब्रह्मणि असत्यत्वादिव्यावृत्तिबोधकत्वं न सम्भवति । विरोध्याकारसमर्पणेन हि विरोध्याकारान्तरं व्यावर्तनीयम् ॥

एवं व्यावृत्तिरूपप्रयोजनं सत्यादिपदानां नास्तीति समर्थितत्वात् , यदुक्तं मायावादिभिः शास्त्रमारोपिताकारव्यावृत्त्या स्वप्रकाशेऽपि प्रयोजनवदिति तदपि निरस्तम् । किञ्च निर्विशेषे स्वयं प्रकाशमाने विरोध्याकारारोप एवानुपपन्न इति पूर्वमेवोक्तम् ॥

तस्मादखण्डं वाक्यद्वयप्रतिपाद्यमित्येतन्मतं दूषितं वेदितव्यम् ॥

स्वक्रियाविरुद्धं च निर्विशेषत्ववचनम् । यथा 'मूकोऽहम्' इत्येतत् स्वक्रियाविरुद्धम् । 'मूकोऽहम्' इति वचनेन हि वक्तृत्वाभाव उच्यते , वचनक्रियया च वक्तृत्वमिति । तथा 'निर्विशेषं ब्रह्म' इत्युक्ते स्वक्रिया-विरुद्धं भवेत् । कथम् । विशेषाभावो हि 'निर्विशेषं ब्रह्म' इति वाक्येन प्रतिपादयितुमिष्टः । प्रतिपादनक्रियया च विशेषाभावलक्षणो विशेषः प्राप्नोतीति ॥ अयमपि विरोधः 'निर्विशेषम्' इत्यनेन निराक्रियत इति कुतः स्वक्रियाविरोध इति चेत् तर्हि 'अहं मूकः' इत्येतद्वचनकर्तृत्वमपि 'मूकोऽहम्' इत्यनेन निराक्रियते इति कुतस्तत्रापि स्वक्रियाविरोधः ॥

'मूकोऽहम् ' इत्यनेनैव एतद्वचनकर्तृत्वनिराकरणमिति न युक्तम् । न प्रतीतिसिद्धवचनक्रियातत्प्रयुक्तवक्तृत्वयोरपलापो युक्त इति चेत्तर्हि 'निर्विशेषम्' इत्यनेनैव विशेषाभावरूपविशेषोऽपि निराक्रियते इति न वक्तव्यम् । प्रतीतिसिद्धप्रतिपादनक्रियातत्प्राप्तविशेषयोरपलापायोगादिति ॥

परबोधनोपायाभावात् 'निर्विशेषं ब्रह्म' इति विशेषाभाववचनम् । न तु ब्रह्मविशेषणतया उच्यते इति चेत् 'अहं मूकः' इत्यपि परबोधनो-पायाभावादेव वचनं वस्तुतस्त्वसौ मूक एवास्तु ॥

'निर्विशेषम्' इत्यस्य विशेषनिरास एव तात्पर्यम् न निर्विशेषत्वविधौ । अतः कथं विरोध इति चेत् तर्हि 'मूकोऽहम् ' इत्यस्यापि वक्तृत्वनिरासे तात्पर्यम् । न तु एतद्वचनकर्तृत्वविधौ । अतः कुतस्तत्रापि विरोधः ॥

'मूकोऽहम् ' इत्यत्र न स्ववचनविरोधः । किन्तु स्वक्रियाविरोध इति चेत् प्रकृतेऽपि स्वक्रियाविरोध एवोक्तः ॥

मूकस्य 'मूकोऽहम्' इति वचनमसम्भावितम् । 'मम कर्णं प्रविश्य गजो गर्जति' इति वचनमिव । अतस्तत्र स्पुटं विरोधोऽवभासत इति चेत् तर्हि निर्विशेषब्रह्मविषये 'निर्विशेषं ब्रह्म' इति वचनमपि असम्भावितमिति कुतो न तत्र स्फुटं विरोधावभासाभावः ॥

एवं महावाक्यावन्तरवाक्ययोरन्यथाऽनुपपत्तिबलात् भेदरहितेऽपि ब्रह्मणि अनुपपत्तिशान्तिहेतुर्विशेषो नाम शक्तिविशेषोऽवश्यमङ्गीकरणीयः। अयं भावः। महावाक्यप्रतिपाद्यमैक्यम् अवान्तरवाक्यप्रतिपादकं सत्यत्वादिकं च ब्रह्मणा परस्परं च अभिन्नमेव। 'एकधैवानुद्रष्टव्यम्' मित्येकरसत्वप्रतिपादकश्रुतेः। न चाभेदपक्षोक्तो दोषः। यतो भेदहीनेऽपि वस्तुनि कश्चिद्वस्तुसामर्थ्यविशेषोऽस्ति येन ब्रह्मणि स्वयं प्रकाशमानेऽपि तदभिन्नमैक्यादिकं न प्रकाशते इति युज्यते, येनैव पर्यायत्वादिकमपि परिह्रियते। स च विशेषः प्रकाशमानस्याप्यप्रकाशनाऽन्यथाऽनुपपत्ति-रूपार्थपत्त्याऽवगम्यत इत्येव त्वया (मायावादिना)ऽपि वक्तव्यमिति ॥

ननु अङ्गीकृतेऽपि विशेषे नानुपपत्तिशान्तिः। तथाहि यदि विशेषो वस्तुनो भिन्नस्तर्हि भेदानवस्थादिदोषः स्यात्। यदि अभिन्नः तर्हि विशेषविशेषिभावानुपपत्तिरिति चेन्न। विशेषविशेषिणोरभेद एवाङ्गीक्रियते। विशेषबलाच्च विशेषविशेषिभाव उपपद्यते। एवं चेत् विशेषपरम्परयाऽनवस्था स्यादिति चेन्न। विशेषस्य स्वनिर्वाहकत्वात्। अयं भावः। भेदभेदिनोर्यो विशेषोऽङ्गीक्रियते स एव विशेषो विशेषान्तरमन्तरेण विशेषविशेषिभावं च घटयति। एकस्यैव निर्वाह्यत्वं निर्वाहकत्वं च विशेषबलादेव सिद्ध्यतीति। अत्रोदाहरणम्। यथा घटप्रकाशनायानीतः दीपः स्वप्रकाशमपि स्वशक्त्यैव साधयेत् तथा भेदव्यवहारायाङ्गीकृतः विशेषोऽपि स्वीयव्यवहारनिर्वाहाय न विशेषान्तरमपेक्षते इति ॥

नन्वभिन्ने वस्तुनि भेदकार्यनिर्वाहकत्वं विशेषस्य कुतः प्रमाणात् सिद्धमिति चेत् विशेषस्वरूपग्राहिण्या अर्थापत्त्या इति ब्रूमः। तथाहि जीवब्रह्मैक्यादीनाम् 'एकधैव' इत्यादिश्रुत्या चैतन्यस्वरूपमात्रं प्रतीयते। चैन्यस्य स्वप्रकाशतया सिद्धेऽपि ऐक्यादीनामसिद्धिः, अपर्यायशब्दवेद्यत्वम्, चैतन्यप्रकाशस्याविद्यानिवर्तकत्वेऽपि ऐक्यज्ञानस्य तन्निवर्तकत्वम् इति

अर्थक्रियाविशेषः, चैतन्यमेकं सत्यत्वादीन्यनेकानि इति सङ्ख्यावैलक्षण्यम्, चैतन्यस्वरूपस्य अवाच्यत्वेऽपि ऐक्यस्य वाच्यत्वमित्यादीनि भेदकार्याणि दृश्यन्ते । एतदुभयाऽन्यथाऽनुपपत्त्या भेदरहितेऽपि चैतन्ये भेदप्रतिनिधिः तत्कार्यकारी कश्चिदतिशयोऽस्तीति कल्पनीयम् । गत्यन्तराभावात् । तथा चानयाऽर्थापत्त्या स्वरूपग्राहिण्या भेदकार्यनिर्वाहक एवासौ विशेषः सिद्ध इति कं तत्र प्रमाणान्वेषणेनेति । अनेन विशेषस्य लक्षणं चोक्तं भवति । भेदहीनेऽप्यनुपचरितभेदव्यवहारनिमित्तं विशेष इति । घटपटनिष्ठभेदे अतिव्याप्तिनिरासाय भेदहीनेऽपीति । 'राहोः शिरः' इत्याद्युपचरित-व्यवहारहेतौ अतिव्याप्तिनिरासायानुपचरितेति । घटादिव्यवहारहेतु-घटत्वादावनतिव्याप्तये भेदव्यवहारेति सर्वं सार्थकम् ॥

न केवलं ब्रह्मणि मायावादिना विशेषोऽङ्गीकरणीयः । किं नाम प्रपञ्च-सत्यतावादिभिरप्यशेषद्रव्येषु सोऽङ्गीकर्तव्यः । तथाहि पटशौकल्ययोरभेदः प्रत्यक्षसिद्धः । दृश्यन्ते च भेदकार्याणि । अतः निर्भेदेऽपि पटेऽस्ति कश्चिदतिशयः भेदप्रतिनिधिरिति कल्पनीयम् । स एव विशेषो नाम । एतदेव विव्रियते । पटः तच्छौक्ल्यं च न भिद्येते । अङ्गुली-द्वयवद्भेदेनानुपलम्भात् । अयुतसिद्धत्वात् भेदेनोपलभ्यत इत्युक्ते तु किमिदमयुतसिद्धत्वं नाम । 'तावेवायुतसिद्धौ तौ विज्ञातव्यौ ययोर्द्वयोः अविनश्यदेकमपराश्रितमेवावतिष्ठते' इत्युक्तेः नियमेन आश्रयाश्रयिभावेन अवस्थानमिति चेत् किमेतावता भेदेन न प्रत्येतव्यम् । तथाहि । नियमेनेति वदन् सम्बन्धविनाशस्य सम्बन्धिविभागस्य च कालान्तरेऽप्यभावेनेति अभिप्रैति । पटशौक्ल्ययोः कुण्डबदरयोश्च भेदः सम्बन्धश्च समानः । कुण्डबदरयोः आश्रयाश्रयिभावसम्बन्धे विद्यमानेऽपि प्रत्यक्षेण भेद उपलभ्यत एव । कालान्तरे भवतु सम्बन्धविनाशो वा सम्बन्धिविभागो वा इदानीन्तनप्रत्यक्षप्रतीत्यप्रयोजकः । तद्वदेव आश्रयाश्रयिभावेन स्थितयोः

पटशौक्ल्ययोरपि भेदप्रतीतिः कथं निवार्यते इति । कुण्डबदरयो-राश्रयाश्रयिभावोऽयावद्द्रव्यभावी । पटशौक्ल्ययोस्तु यावद्द्रव्यभावी इति नायं दृष्टान्तो भवतीति चेत् घटस्य श्यामता पाकेन नश्यतीति साऽयावद्द्रव्य-भाविनी किन्तु श्यामतादशायां पटशौक्ल्यप्रतीतिः घटश्यामताप्रतीतेर्मनागपि विलक्षणं नानुभूयते । अतः यावदयावद्द्रव्यभावित्वमात्रेण वैलक्षण्योप-पादनमयुक्तम् ॥

पटशौक्ल्योराश्रयाश्रयिभावेन प्रतीतिमभ्युपेत्येदमुक्तम् । वस्तुतस्तु न तथा प्रतीतिः कस्यचित् । बदराणां कुण्डमिव शौक्ल्यस्य पटोऽधिकरणत्वेन न परिस्फुरति । बदराणामिव शौक्यमाधेयत्वेनापि न परिस्फुरति । किं नाम पट एव शुक्ल इति प्रतीतिः । न चैषा प्रतीतिर्भ्रान्तिः । बाधकाभावात् । पटशौक्ल्ययोर्भेदावगाहिनी प्रत्यक्षप्रतीतिर्हि बाधिका भवेत् । सा नास्तीति प्रागेवोक्तम् । अनुमानस्य वा अर्थापत्तेर्वा प्रत्यक्षविरोधेनोत्थानस्यैव असम्भवः ॥

एवं प्रत्यक्षत एव सिद्धः पटशौक्ल्ययोरभेदः । दृश्यन्ते च भेदकार्याणि । अ) पटशौक्ल्यबुद्ध्योरन्यूनानतिरक्तविषयत्वाभावः । रक्तपटे शुक्लत्वबुद्धिं विनापि पटबुद्धिः, बलाके पटबुद्धिं विनापि शौक्ल्यबुद्धिरनुभवसिद्ध इति । आ) तच्छब्दयोरपर्यायत्वम् । पर्यायत्वे पटः शुक्ल इति प्रयोगो न स्यात् ॥ इ) तच्छब्दयोरपर्यायशब्दस्मारकत्वम् । पटशब्देन वस्त्रशब्दस्मरणं भवति । शुक्लशब्देन धवलशब्दस्मरणं भवति । वस्त्रधवलशब्दावपर्यायौ । ई)अर्थक्रियाभेदः पटे शीतनिवारणरूपार्थक्रिया वर्तते । शौक्ल्ये तन्नास्ति । शौक्ल्ये नीलादि व्यावृत्तिजकत्वरूपक्रिया वर्तते । पटे तन्नास्ति । जलाहरणाद्यर्थक्रियाभेद इति सुधावाक्यम् अतद्गुणसंविज्ञानबहुव्रीहिमुपेत्य व्याख्येयम् । उ) 'पटमानय' इत्युक्ते यत्किञ्चितुशुक्लानानयनम् एवं 'शुक्लमानय' इत्युक्ते नियमेन पटानानयनम् । अन्यूनानतिरिक्तत्वस्यैव

भङ्ग्यन्तरेणेयमुक्तिः । ऊ) अपटः पटः इतिवत् अशुक्लः पटः इत्यनयो-र्विरोधाभावः । ऋ) अन्धस्यापि 'पटोऽयम्' इतिवत् 'शुक्लोऽयम्' इति प्रतीत्यभावः । अथवा शुक्लाप्रतिपत्तिवत् पटाप्रतिपत्त्यभावः । ॠ) महारजन-सम्पर्केण शुक्लत्ववत् पटस्य आवृतत्वाभावः अथवा पटवत् शुक्लत्वस्य अनावृतत्वाभावः । ऌ) पटस्य तन्तुविन्यासविशेषरूपतया प्रतीतिवत् शौक्ल्यस्याप्रतीतिः । अथवा शौक्ल्यस्य तन्तुविन्यासविशेषरूपतया अप्रतीतिवत् पटस्य प्रतीत्यभावाभावः । एवमादीनि ॥ नन्वेषा प्रतीतिः भ्रान्तिः । बाधितत्वाभिमानस्याभावात् व्यवहाराद्यविसंवादाच्च ॥

तदेतयोरभेदभेदकार्यप्रतीत्योरन्यथाऽनुपपत्त्या विशेषोऽङ्गीकर्तव्यः । एवमन्यत्रापि द्रव्ये विशेषः प्रतिपत्तव्यः । अत एव भगवत्पादैः 'सोऽस्ति वस्तुष्वशेषतः' इत्युक्तम् ॥

ननु भेदाभेदाङ्गीकारेणानुपपत्तेः शमनात् किं विशेषेण । (विशेषसाधिकाऽर्थापत्तिरन्यथोपपत्तिप्रतिहतेति भावः) इति चेन्न । परस्पर-विरुद्धयोर्भेदाभेदयोरेकत्रावस्थानघटनायापि विशेषोऽङ्गीकरणीयः । भेदा-भेदयोः प्रतीतत्वात् को विरोध इति चेत् सत्यम् । प्रतीतिरपि कथम् उपपन्नेति चिन्तायां वस्तुस्वभावातिशयस्यानुसरणीयत्वात् । सोऽतिशय एव विशेष इत्युक्तत्वात् । किञ्च भेदाभेदानवस्थापरिहारार्थमपि विशेषा-ङ्गीकारस्य अवश्यकत्वमिति पूर्वमेवोक्तम् ॥

ननु सर्ववस्तुषु यदि विशेषोऽस्ति, स च वस्तुनो न भिद्यते, प्राप्तं तर्हि सकलवस्तूनामैक्यमिति चेन्न । विशेषा अनन्तेषु द्रव्येषु अनन्ता एव सन्ति न पुनरेक एव सर्वत्र । अतो नोक्तदोषः ॥ ननु एकैकस्मिन् द्रव्ये यदि विशेषोऽप्येकैकोऽस्ति तदा पटो महान् पटः शुक्लश्चलतीति विचित्रानेक-व्यवहारानुत्पत्तिः । न ह्येकस्मादविच्छिन्नस्वभावाद् विचित्रानेक-कार्योत्पत्तिर्दृष्टा । तथा सत्याकस्मिकत्वप्रसङ्गात् । अभिन्ने वस्तुनि

भेदकार्यनिर्वाहाय हि विशेषोऽङ्गीकृतः । अङ्गीकृतेऽपि विशेषे यदि पटो महान्, पटः शुक्लः, पटश्चलतीत्यादि विचित्रानेकव्यवहारानुत्पत्तिः तर्हि विशेषाङ्गीकारो व्यर्थः स्यादिति चेन्न । उक्तलक्षणा विशेषा अशेषतोऽपि वस्तुषु प्रत्येकमनेके सन्ति । यत्र यावन्तो व्यवहारास्तत्र तावन्तो विशेषाः । अतो नोक्तदोषावकाशः ॥

ननु प्रतिद्रव्यमनेकत्वे विशेषाणां परस्परं भेदेन भाव्यम् । तथा च भिन्नानां विशेषाणां द्रव्याभेदे द्रव्यस्यापि । भेदप्रसङ्ग इति चेन्न । परस्पर-विशेषवत्त्वेनानेकत्वसम्भवात् । विशेषस्य भेदकार्यकारिताया उक्तत्वात् ॥

विशेषाणामपि विशेषाङ्गीकारेऽनवस्थेति चेन्न विशेषाणां स्वनिर्वाहकत्वात् । पूर्वं द्रव्येण विशेषस्याभेदचिन्ता इदानीं तु परस्परमिति स्फुटोऽर्थभेदः । अतो न पौनरुक्त्यम् । सर्वं चैतद्विशेषस्वरूप-साधकार्थापत्त्यैव सिद्धमिति न तत्र पृथक् प्रमाणान्तरापेक्षा । अनुपपद्यमाने उपपादकबुद्धिर्हि अर्थापत्तिः । न हि स्वयमनुपपन्नमनुपपत्यन्तरशान्त्यै समर्थं भवति । किन्तु यथायथोपपाद्यते तथातथैव स्वरूप-ग्राहिण्याऽर्थापत्त्यैव कल्प्यते ॥

यद्यपि वैशैषिकाधिकरणे वक्ष्यमाणरीत्या विशेषः । प्रत्यक्षसिद्धोऽपि भवति तथापि विप्रतिपन्नो न तावन्मात्रेण बोधयितुं शक्यत इति अर्थापत्तिरुपन्यस्ता ॥

यत एवं सर्ववादिभिरपि विशेषोऽङ्गीकर्तव्यस्ततः निर्भेदमपि ब्रह्म विशेषसामर्थ्यादनन्तगुणं भण्यते । मायावादिना लक्ष्यलक्षणयोर्भेदोवाऽभेदो वा इति यत्पृष्टं तस्येदमुत्तरं भवति । लक्ष्यलक्षणयोर्भेदोनास्ति । लक्ष्यं ब्रह्मलक्षणैः स्रष्टृत्वादिभिर्निर्भेदम् । न चानेकलक्षणाभिन्नस्यानेकत्वप्रसङ्गो वा , एकस्मादभिन्नानां लक्षणानामेकत्वानुपपत्तिर्वा , शब्दपर्यायत्वं वा, गुणगुणित्वाद्यनुपपत्तिर्वा । विशेषबलेनैतत्समस्तोपपत्तेः । ब्रह्मणो

जगज्जन्मादिकारणत्वे प्रकृतेऽपि ब्रह्मणोऽनन्तगुणत्वकथनं मुख्यतोऽनन्तगुणत्वमेव ब्रह्मणोलक्षणं, तत्साधनाय जगज्जन्मादिकारणत्वं लक्षणमभिहितमिति सूचयितुम् ॥

तदेवं जगज्जन्मादिकारणत्वस्य स्वलक्षणत्वे बाधकाभावान्न तटस्थत्वकल्पनं युक्तमिति सिद्धम् ॥

अत्र पुनराशङ्का । किमर्थं लक्ष्यलक्षणयोरभेदमङ्गीकृत्य विशेषबलेन सर्वव्यवहारसमाधानं क्रियते। भेद एव कस्मान्नाङ्गीक्रियते । तर्हि गुणगुणिभावः कथमिति चेत् समावायसम्बन्धादिति ब्रूमः । हन्त तर्हि सूत्रकारेण समवायो निराकरिष्यत इति नाङ्गीकारार्ह इति चेत् तदा गुणगुणिनोरेव कश्चित् तादृशः स्वरूपसम्बन्धिविशेषः इत्यङ्गीकरणीयम् । ननु पटादौ भेदाभावेऽपि विशेषबलाद् व्यवहारविशाषदर्शनात् ब्रह्मण्यपि तथा कल्प्यत इति चेन्न । निश्चायकप्रमाणाभावात् । निश्चायकप्रमाणोपन्यासार्थं हि सम्भावना कल्प्यते ॥ यथाऽऽहुः -

**‘ सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुना ।**
**न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृतः’** इति ॥

असम्भवावितस्य साधनार्थं हेतुप्रयोगो व्यर्थ इति भावः । अतः न केवलं सम्भावनैवार्थसाधिका इति ॥

तत्रेदं समाधानम् । ‘एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति’ इति कठश्रुतौ ब्रह्मधर्माणां पृथग्दर्शननिन्दयाऽभेदोऽवगम्यते । धर्माणां ब्रह्मणा अभेदेऽपि ‘धर्मान् ’ इति धर्मबहुत्वोक्त्या सविशेषत्वम् । ‘धर्मान् ’ इत्यनुवादमात्रमिति न वक्तव्यम् । श्रुतिं विना धर्माणामेवासिद्धेः । ईश्वरधर्मबहुत्वप्रापकमूलश्रुत्यङ्गीकारे सैव विशेषाभिधायी भविष्यतीति निर्भेदमेव ब्रह्म विशेषबलादेव नानाव्यवहारगोचरमित्येतत् प्रमितम् । अतो न केवलसम्भावनैषा ॥

नन्वत्र निर्णीतं जगत्कारणत्वं यदि पररीत्या उपादानत्वरूपं तर्हि न तेन गुणपूर्णतासिद्धिः । तथाहि परिणामोपादनत्वेऽल्पगुणजगदभेदेन अल्पगुणप्राप्तिः स्यात् । विवर्तोपादानत्वे गुणानामेवाप्राप्तिर्दूरे तत्पूर्णत्वस्य । अतः अवश्यमेतत् निराकर्तव्यम् ।। किञ्च परैः ब्रह्म जगतो निमित्तोपादनमित्यङ्गीक्रियते । तदङ्गीकारार्होवेत्यत्र न किञ्चिदुक्तं भगवत्पादैरिति चेत् तदेतत्सर्वं प्रकृत्यधिकरणे निपुणतरं निराकरिष्यते ।।

तस्मादुक्तलक्षणद्वयोपपन्नं ब्रह्म नारायणाख्यं मुमुक्षुणा जिज्ञास्यमिति स्थितम् ।

**।। इति जन्माधिकरणम् ।।**

# ॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

## ॥ ॐ शास्त्रयोनित्वात् ॐ ॥

जगज्जन्मादिकारणत्वं परब्रह्मणो विष्णोर्लक्षणमभिहितम् । तस्य हरहिरण्यगर्भादिचेतनेषु प्रधानाद्यचेतनेषु च पाशुपताद्यागमानुमानावलम्बेन अतिव्याप्तिमाशङ्क्य अस्मिन्नधिकरणे शास्त्ररूपप्रमाणोक्त्या परिहरति सूत्रकारः ॥

तत्रायं पूर्वपक्षः ॥ द्विविधो हि शिवप्रणीत आगमः । कश्चित् प्रत्यक्षयोग्यसम्पदादिफलमुद्दिश्य साधनानि विदधत् । अपरस्तु स्वर्गापवर्गाद्यप्रत्यक्षफलानि विदधत् शिवस्य जगज्जन्मादिकारणत्वसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वाद्यशेषगुणपूर्णत्वं निरवद्यत्वं च प्रतिपादयति । तत्राद्यस्तावत् प्रामाणम् । तदुक्तसाधनानुमाने सति प्रत्यक्षत एव फलदर्शनात् । तदयं प्रयोगः । विमतः आगमः प्रमाणं सफलप्रवृत्तिजनकत्वात् चरकसुश्रुतादिवत् (चरकसुश्रुतौ वैद्यग्रन्थविशेषौ) । अस्योपोद्बलकः विपक्षे बाधकतर्कोऽप्यस्ति । यद्यप्रमाणमभविष्यत् तर्हि न समर्थां प्रवृत्तिमकरिष्यत् विप्रलम्भकवाक्यवत् इति ॥

अत्र न्यायसूत्रसम्मतिरप्यस्ति । **'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यात् अर्थवत् प्रमाणम्'** इति । अस्यार्थः । प्रमाणतोऽर्थे प्रतिपन्नेऽपि यावत् प्रवृत्तिसामर्थ्यं तत्र न ज्ञायते तावत्तत्रार्थवत्त्वं तद्घटितं प्रामाण्यं न निश्चियते; किन्तु प्रवृत्तिसामर्थ्यात् समर्थप्रवृत्तिजनकत्वात् प्रमाणत्वेन अभिमतं ज्ञानम् अर्थवत् प्रामाण्यवदवसीयते इति । ततश्च तत्प्रणेतुः शिवस्य परमाप्तत्वमवधार्य तद्दृष्टान्तेन तत्प्रणीतस्य द्वितीयस्यागमस्य प्रामाण्यमवसीयते ॥ अत्र च प्रयोगः । विमतः आगमः प्रमाणं शिववाक्यत्वात् सम्प्रतिपन्नवदिति । यदि विमतः प्रमाणं न स्यात्तर्हि

शिवस्य अनाप्तत्वप्रसङ्गः इति विपक्षे बाधकतर्कोऽप्यस्ति ॥

तदेवमनुमितप्रामाण्येन शैवागमेन शिवस्य जगज्जन्मादिकरणत्वाभिधानात् नेदं लक्षणं विष्णोरुपपद्यत इति शैवाः ॥

अनयैव दिशा तत्तदागमप्रामाण्यं प्रसाध्य हिरण्यगर्भादितत्तद्देवतावादिनां प्रत्यवस्थानानि द्रष्टव्यानीति ॥

अनुमानान्यप्येतद्विषये सन्ति । तानि दूषणसौकर्याय उत्तरत्र उपन्यस्यन्ते । एवमागमादनुमानाच्चान्येषां जगज्जन्मादिकारणत्वे प्राप्ते प्रतिविहितं सूत्रकृता । आगमादन्यतो वाऽन्ये जगत्कारणत्वेन न कल्पनीयाः । जगज्जन्मादिकारणस्य वस्तुनो वेदादिशास्त्रैकसमधिगम्यत्वेन शैवाद्यागमानुमानागोचरत्वान्न तैरन्येषां जगत्कारणत्वं कल्पनीयम् । किन्तु शास्त्रं यस्य जगत्कारणत्वमाचष्टे स एव तथाऽभ्युपगन्तव्य इति ॥

स्यादेतत् । यदि शास्त्रैकसमधिगम्यत्वं सौत्रो हेतुः सिद्धः स्यात् । नचैवम् । प्रत्यक्षागम्यत्वेऽपि शैवाद्यागमैः शिवादीनां जगत्कारणत्वस्य निश्चेतुं शक्यत्वात् इति चेन्न । शैवाद्यागमप्रामाण्यसाधकानुमानस्य प्रतिपक्षदुष्टत्वात् । तथाहि । यदि प्रत्यक्षसंवादेन दृष्टार्थानां शिवादिवाक्यानां प्रामाण्यमनुमाय तद्दृष्टान्तेन अदृष्टार्थानामपि शिवादिवाक्यत्वेन हेतुना प्रामाण्यमनुमीयते तर्हि दृष्टार्थेष्वेव वाक्येषु यत्प्रत्यक्षत एव फलव्यभिचारि दृश्यते तस्य अप्रामाण्यमनुमाय तद्दृष्टान्तेन शिवादिवाक्यत्वेन हेतुना एव अदृष्टार्थानामपि अप्रामाण्यमनुमातुं शक्यत एव ॥ तथा हि प्रयोगौ । विमतमप्रमाणमसमर्थप्रवृत्तिजनकत्वात् विप्रलम्भकवाक्यवत् । विमतानि अप्रमाणानि शिवादिवाक्यत्वात् सम्प्रतिपन्नवाक्यवदिति । न हि दृष्टार्थं सर्वमेव वाक्यं समर्थप्रवृत्तिजनकम् । विफलप्रवृत्तिजनकस्यापि बहुलमुपलम्भात् ॥

ननु विफलप्रवृत्तिजनकमपि वाक्यं प्रमाणमेव । किन्तु फलव्यभिचारः

कर्त्रादिवैगुण्यनिमित्त इति चेत्तर्हि सफलप्रवृत्तिजनकमपि वाक्यमप्रमाणमेव । किन्तु फलसंवादः काकतालीयो वा जगद्व्यामोहकानां शिवादीनां गुडजिह्विका वेत्यस्तु । **गुडजिह्विका** नाम कषायौषधिसेवनार्थं रोचकत्वेन मात्रा शिशवे गुडादिकं दीयते इति या सा । स्वकृतशास्त्रे विस्रम्भार्थं शिवादयः किञ्चित् फलं ददतीति भावः । एवं चेत् **'पुत्रकामः पुत्रेष्ट्या यजेत'** इत्यादि दृष्टफलविधायकवेदवाक्येषु उक्तफलादर्शने कर्तृकर्मादिवैगुण्यनिमित्तकत्वं कल्प्यमानं कथमिति चेत् - वेदस्य अपौरुषेयत्वेन प्रामाण्यं निश्चितमेव । अतः तत्र फलादर्शनस्य कर्त्रादिवैगुण्यनिमित्तकत्वं शक्येत कल्पयितुम् । प्रकृते तु फलाव्यभिचारेणैव प्रामाण्यं त्वया परिकल्प्यते । तथा च सिद्धे प्रामाण्ये फलाव्यभिचारस्य अन्यनिमित्तत्वकल्पनम् । सिद्धे च तस्यान्यनिमित्तत्वे फलसंवादेन प्रामाण्यकल्पनमिति अन्योन्याश्रयत्वं भवति । प्रतिपक्षानुमाने शिववाक्यत्वहेतुः फलसंवादिनि अनैकान्तिक इति चेन्न । तवापि फलविसंवादिभिरनैकान्त्यात् ॥

किञ्च यः शिवागमस्यादृष्टार्थस्याप्येवं प्रामाण्यं मन्यते स हिरण्यगर्भाद्यागमानामपि प्रामाण्यमङ्गीकरोति न वा । नाद्यः । परस्परविरुद्धयोरुभयोः प्रामाण्यायोगात् । न द्वितीयः । एतादृशानुमानाभ्यामेव हिरण्यगर्भागमस्यापि प्रामाण्ये सम्भवति वैषम्यानुपपत्तेः ॥

अथ तदनुमानमप्रयोजकम् । हिरण्यगर्भवाक्यत्वेऽपि आगन्तुकेन विप्रलम्भादीनां दोषेण हिरण्यगर्भागमस्य अप्रामाण्यसम्भवादिति चेत् तर्हि शिववाक्यत्वेऽपि आगन्तुकविप्रलम्भकदोषेण शैवागमस्यापि अप्रामाण्यसम्भव इति सुवचम् ॥

आभाससमानयोगक्षेमत्वाच्च नैवं साधनं युक्तम् । तथा हि - अनेनैव न्यायेन चैत्यवन्दनादिवाक्यानामपि प्रामाण्यं शक्यसाधनम् । न हि तद्वक्ता

कदापि सत्यं नावादीदिति तत्सत्यं वाक्यं दृष्टान्तीकृत्य तद्वाक्यत्वहेतुना चैत्यवन्दनादिवाक्यस्यापि प्रामाण्यं साधयितुं शक्यते ॥

तदेवं शैवाद्यागमप्रामाण्यस्य अशक्यसाधनत्वान्न तेन जगत्कर्ता शिवादिरिति सिद्ध्यति ॥

मा भूच्छैवाद्यागमात् जगत्कारणत्वसिद्धिः । अनुमानैस्तु भविष्यति । तत्कथं शास्त्रैकसमधिगम्यत्वं जगत्कारणस्येति चेत् किं शास्त्रानुसार्यनुमानं जगत्कारणे प्रमाणमुच्यते । उत स्वतन्त्रम् । आद्यस्त्वङ्गीक्रियत एव । तेनास्मत्पक्षस्यैव सिद्धेः । समन्वयसूत्रे शास्त्रस्य भगवदेकनिष्ठत्वं वक्ष्यत इति ॥

द्वितीयः पक्षः दुष्टः । जगत्कारणेश्वरविषये स्वतन्त्रानुमा न प्रमाणम् । एतदुपपादनार्थमत्तरो ग्रन्थः ॥ तथाहि । शैवादयः एवं प्रयुञ्जते । क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् । विमतं कर्म प्रयत्नाधारजं कर्मत्वात् सम्प्रतिपन्नवत् । विप्रतिपन्ने पृथिव्युदके प्रयत्नवता धृते गुरुत्वे सत्यम्पातित्वात् सम्मतवत् । क्षित्यादिकं प्रयत्नवद्विनाश्यं नाश्यत्वात् सम्प्रतिपन्नवत् । एवमादि सृष्टिस्थितिलयकर्तृत्वसाधकानुमानैः विश्वोदय-स्थितिलयकर्तरि सामान्यतः सिद्धे अस्मदादीनां तदसम्भवात् भगवान् शिव एव परिशेषाज्जगज्जन्मादिकर्ता सिद्ध्यति । यथा लोके चित्रादिकार्य-दर्शनात्तदनुगुण एव चित्रकारादिकर्ता कल्प्यते एवं विचित्रानेक-कार्यदर्शनात् कल्प्यमानोऽपि तदनुगुणसार्वज्ञादिमानेव सिद्ध्यति । अथवा क्षित्यादीनां कर्ता इत्येतदन्तर्गतमेव सार्वज्ञादिकम् । निमित्तोपादान-फलाद्यभिज्ञस्य तदनुगुणेच्छायत्नवत एव कर्तृत्वात् । अतो न तत्र यत्नान्तरापेक्षा । एवं हिरण्यगर्भादिष्वपि परिशेषेण जगत्कारणत्वं योज्यमिति ॥

तदिदमपेशलम् । तथा हि यत्तावत् सामान्यतो जगत्कर्तृत्वसिद्धौ

कार्यत्वानुमानं प्रयुक्तं तत्रैवं विकल्प्यते । किं कारणादिसाक्षात्कारवत् - कर्तृकत्वं साध्यमुत सकर्तृकत्वमात्रं वेति । आद्ये साध्यवैकल्यम् । न हि घटस्य कर्तृत्वेन सम्मतः कुलालः घटकारणानि धर्माधर्मादीनि साक्षात् कुरुते । धर्माधर्मादिसाक्षात्काराभावेनैव कुलालः कदाचित् प्रतिहतेच्छो भवतीति चेत् किमेतावता । साध्यवैकल्यापरिहारात् । कुलालस्याप्रतिहतेच्छत्वे कारणकथनमेव अनेन स्यात् न तु साध्यवैकल्यपरिहार इति भावः । अप्रतिहतेच्छेति हेतुविशेषणत्वे साधनवैकल्यं स्यात् । अप्रतिहतेच्छेति हेतोर्विशेषणदानेन घटे कुलालस्य अप्रतिहतेच्छाकार्यत्वाभावेन हेतुव्यतिरेके सिद्धे साध्यवैकल्यस्यापि सत्त्वेन केवलव्यतिरेकी हेतुरयमिति चेन्न । हेतौ यदप्रतिहतेच्छत्वरूपं विशेषणं दत्तं तस्य पक्षे क्षित्यादिके अद्यापि असिद्धत्वेन विशेषणासिद्धेः । क्षित्यादीनां सर्वज्ञत्वादिविशिष्टेश्वरकर्तृकत्वं हि सिसाधयिषितम् ॥

द्वितीये सिद्धसाधनम् । न्यायमते सर्वस्यापि यथायथं तत्तज्जीवोपभोग्यतया जीवादृष्टनिर्मितत्वेन अदृष्टद्वारा जीवानामेव कर्तृत्वोपपत्तेः, ईश्वरमनङ्गीकुर्वता जीवानामेव कर्तृत्वाङ्गीकारेणेति भावः ॥

जीवानां कारणानभिज्ञत्वात् तेषामेव कर्तृत्वाङ्गीकारो नोचितः । अतो न सिद्धसाधनता इति चेत् तर्हि कुलालादीनामपि कारणानभिज्ञत्वात् कर्तृत्वानुपपत्तिरिति घटादिदृष्टान्ते सकर्तृकत्वरूपसाध्यवैकल्यं स्यात् ॥

अदृष्टद्वारा जीवात्मनामेव कर्तृत्वमादाय सिद्धसाधनताऽऽशङ्किता खलु । तत्रापि अन्ततोऽदृष्टाधिष्ठातृतयेश्वरोऽङ्गीकार्यः । चेतनस्याधिष्ठातुरभावेऽचेतनस्य स्वतःकारणतया क्वाप्यदर्शनात् । तथा चादावेव साक्षात्कर्तृताया प्राप्त ईश्वरः कस्मादपोद्यते इति चेन्न । अधिष्ठातृकृत्याभावात् । अधिष्ठात्रा अदृष्टेन नोदानाख्यसंयोगविशेषो वा परिस्पन्दरूपकर्म वा जायते इति वक्तुं न शक्यते । अदृष्टस्य अद्रव्यत्वात् ।

अधिष्ठात्रा किञ्चिदतिशयजन्म भवतीति चेत् सोऽतिशयः किं गुणादिर्वा शक्तिर्वा सहकारिसमवधानं वा कार्यकारित्वं वा । न गुणादिः । गुणकर्मद्रव्याणां गुणेऽभावात् , सामान्यविशेषसमवायानां नित्यत्वेन जन्माभावात् । न्यायमते अदृष्टस्य गुणत्वात् । न चातीन्द्रियाधेयशक्तिः । तार्किकमते तादृशशक्तेरनभ्युपगमात् । प्रकृते तु तार्किकाभिमतस्य ईश्वरानुमानिकत्वस्य अपाकरणात् । न च सहकारिसमवधानम् । अदृष्टादेव तदुपपत्तेः ईश्वरेण न कृत्यम् । नापि कार्यकारित्वम् । कार्यकारित्वस्य अदृष्टस्वभावत्वात् । स्वभावादेव भवतः कार्यस्य नेश्वरेण प्रयोजनमिति भावः । तर्हि अदृष्टोत्पत्तिसमन्तरमेव कथं न कार्योत्पत्तिरिति चेत् प्रबलादृष्टान्तरप्रतिबन्धेन वा कारणसामग्रीवैकल्येन वेति वदामः ॥

किञ्च कार्यत्वरूपो हेतुः पक्षे कुतः सिद्धः । अभूत्वाभावित्वादिति चेत् न । तस्यैव कार्यत्वात् । कृतिसाध्यत्वं कार्यत्वम् । प्रागभावप्रतियोगित्वं वा कार्यत्वम् । असतः सत्तासम्बन्धोऽभूत्वाभावित्वमिति भेदोद्घाटने भागासिद्धिः स्यात् । न खलु गिरिसागरादीनामभूत्वाभावित्वमस्माभिरुपलभ्यते ॥

कार्यद्रव्याश्रितगुणत्वादिना तद्गुणादीनां कार्यत्वं पश्चात्साधयिष्यते । द्रव्येषु तावत् सावयवत्वात् कार्यसिद्धिरिति चेन्न । विमतं द्रव्यं कार्यं सावयवत्वात् घटवत् इति प्रयोगोऽत्र विवक्षितः । तत्र सावयवत्त्वं नाम समवायिकारणवत्वं वा परिणामिकारणवत्वं वा । आद्ये प्रतिवादिभिरस्माभिः समवायिकारणस्यैवानङ्गीकारादसिद्धिः । तच्च वैशेषिकाधिकरणे स्पष्टीभविष्यति । द्वितीये वादिनं त्वां प्रति असिद्धिः । अवयवाः परिणामिकारणमिति त्वया अनङ्गीकारात् । तर्हि सावयवत्वं नाम केवलं कारणवत्वं ब्रूमः, तच्च प्रतिवादिमते परिणामिकारणवत्वं मन्मते समवायिकारणवत्त्वमिति न दोष इति चेत् यस्य कार्यत्वमात्रे विप्रतिपत्तिः

स कथं कारणवत्वमभ्युपगच्छति । अतः असिद्धिः दुष्परिहारा ॥

किञ्च अस्माभिः समवायिकारणस्यैवानङ्गीकारात् उभयवाद्यभिमतं कारणवत्त्वरूपं सामान्यमेव न सिध्यति पारमार्थिका-निर्वचनीयभेद-गतभेदत्वमिव ॥

ननु क्षित्यादीनां प्रत्यक्षत एव प्रदेशवत्त्वमनुभूयते । भूतले घटभावा-भावयोर्युगपदुपलभ्यमानत्वात् । अतः सावयवत्वं सिद्धमिति चेत् एवं तर्हि सावयवत्वं नाम प्रदेशवत्त्वमित्युक्तं स्यात् । तदा आकाशे पक्षिणो भावाभावौ युगपदुपलभ्येते इति तस्यापि प्रदेशवत्त्वरूपसावयवत्त्वं तत एव कार्यत्वं प्रसज्येत । आत्मनोऽपि -

**'परमाण्वादिदेशेषु व्याप्त्यै व्यामादिकेष्वपि ।**

**यथात्मानः प्रदेशाः स्युः'** इत्युक्तप्रकारेण प्रदेशवत्त्वसावयववत्त्वेन कार्यत्वप्रसङ्गः । संयोगस्य स्वात्यन्ताभावसमानाश्रयत्वात् यस्मिन्नाकाशे पक्षिसंयोगस्तस्मिन्नेवाकाशे पक्षिसंयोगाभावश्चेति पक्षिसंयोगतदभावा-वच्छेदकत्वेन प्रदेशो न कल्पनीयः । अतः प्रदेशवत्त्वरूपहेतोरेवाभावान्न कार्यत्वप्रसङ्ग इति चेत् तर्हि भूतलेऽपि घटसंयोगतदभावौ स्त एवेति तत्रापि प्रदेशवत्त्वाभावात् असिद्धिः स्यात् ।

खननादिना येषां विभागो नोदनादिना च येषां संयोगस्ते क्षित्यादीनामवयवाः प्रत्यक्षसिद्धा इति चेत् 'इह पक्षी नेह पक्षी' इत्यबाधितप्रतीतिसिद्धा अवयवा आकाशे न किं प्रत्यक्षसिद्धाः । आकाशे प्रसृतस्य आलोकस्य अवयवास्ते इति चेत् तमसाऽवृते आकाशे 'इह दीपो नेह दीपः' इति प्रतीतिसिद्धा अवयवाः किं न प्रत्यक्षसिद्धाः ॥

किञ्च एवं वदता किं संयोगविभागिसजातीयद्रव्यान्तरत्वं सावयवत्वं किं वा तदारब्धत्वम् । आद्ये परमाणूनामपि परमाण्वन्तर संयोगविभागवत्त्वेन उक्तरूपहेतुसत्वेऽपि कार्यत्वाभावात् व्यभिचारः ।

द्वितीये व्यर्थविशेषणत्वम् । आरब्धत्वमात्रस्य कार्यत्वाव्यभिचारात् । यः कार्यत्वं नाभिप्रैति-स आरब्धत्वमपि नाभिप्रैतीति असिद्धिश्च । अथवा आरब्धत्वस्य समावायिकारणवत्त्वे प्रतिवाद्यसिद्धिः । परिणामकारणवत्त्वे वाद्यसिद्धिः ॥ अनेन विमतं कर्म (आदिकालीनं परमाणुकर्म) प्रयत्नाधारजम् कर्मत्वात् सम्प्रतिपन्नवदित्यपि निरस्तम् । अदृष्टद्वारा जीवानामेव प्रयत्नाधारत्वोपपत्त्या सिद्धसाधनताप्राप्तेः । अनेनैव प्रकारेण तृतीयानुमानमपि निरस्तम् । जीवानामेव अदृष्टद्वारा धारणेन सिद्धसाधनात् ॥

किञ्च यथा वृक्षसंयोगः फलपतने, वेगः शरीरादिपतने, प्रयत्नो गगनतलगतखगशरीरादिपतने प्रतिबन्धकः तथा पृथिव्युदकयोः पतने क्लृप्तानां संयोगादिप्रतिबन्धकानामभावेऽपि जीवादृष्टमेव प्रतिबन्धकमस्तु । **'धर्मिकल्पनातो धर्मकल्पना लघीयसी'** इति न्यायात् । ईश्वरकल्पनात् दृष्टे एव जीवे अदृष्टरूपधर्मकल्पनाच्च । तथा च गुरुत्वे सत्यपातित्वानुमानस्य अन्यथासिद्धिः । अपातित्वं च सन्दिग्धम् । महत्वेन पतनानुपलम्भसम्भवात् ॥

जीवानामेवादृष्टद्वारा विनाशकत्वोपपत्त्या अर्थान्तरत्वेन चतुर्थानुमानमपि निरस्तम् ॥

उपन्यस्तानां चतुर्णामप्यनुमानानां सत्प्रतिपक्षता । तथाहि प्रतिपक्षानुमानानि ॥ क्षित्यादिकं विकर्मकम् अनुपलभ्यमानकर्तृकत्वात् गगनवत् । विमतं कर्म न प्रयत्नाधारजम् अनुपलभ्यमानस्वजनक-प्रयत्नाधारकत्वात् सम्प्रतिपन्नवत् । विमते पृथिव्युदके न प्रयत्नवता धृते अनुपलभ्यमानस्वधारकप्रयत्नवत्कत्वात् सम्प्रतिपन्नवत् । क्षित्यादिकं प्रयत्नवद्विनाश्यं न अनुपलभ्यमानस्वविनाश्यप्रयत्नवत्कत्वात् गगनवत् इति ॥ द्वितीयानुमाने नदीप्रवहनं दृष्टान्तः । तृतीये ग्रहनक्षत्रादीनि दृष्टान्तः ॥

ननु अनुपलभ्यमानत्वं यत्किञ्चित्पुरुषानुलभ्यमानत्वं वा सर्वानुपलभ्यमानत्वं वा । आद्यं व्यभिचारि । अन्त्यं सन्दिग्धासिद्धमिति चेत् अनुपलभ्यमानत्वमिह अस्मदुपलब्ध्ययोग्यत्वं विवक्षितम् । अतो नोक्तदोषः । अयोग्यत्वमित्युक्त्या अस्मदनुमानविषये देशान्तरगते व्यभिचारो वारितः । तत्र उपलब्ध्यविषयस्य सत्त्वेऽपि अयोग्यत्वस्य अभावात् । अत एव परसुखादावपि न व्यभिचारः । तत्र अस्मदनुमिति-योग्यत्वस्य सत्त्वात् ॥

एवमस्मदुपलब्ध्ययोग्यत्वेन विकर्तृकत्वमनुमीयते चेत् क्षित्यादि-कर्ताऽपि अनुमानादुपलभ्यते इति चेन्न । अनुमानादीश्वरोपलब्धौ अस्मदनुमानस्य असिद्ध्या दुष्टत्वम् । तथा च अस्मदनुमानप्रतिरोधाभावेन अनुमानादीश्वरोपलब्धिरिति अन्योन्याश्रयत्वप्रसङ्गात् ॥

अनयैव दिशा परोत्प्रेक्षितानि सर्वाणि जगत्कारणमात्रसाधनानि स्वतन्त्रानुमानानि निरसनीयानि । तत्प्रकारस्तु तर्कताण्डवे व्यक्तः ॥

यच्च शिवादीनां जगत्कारणत्वे परिशेषानुमानमुपन्यस्तं तदपि शास्त्रानुसारि वा केवलं वा । नाद्यः । शास्त्रं भगवदेकपरमिति समन्वयाधिकरणे वक्ष्यमाणत्वात् । न द्वितीयः । केवलस्य सत्प्रतिपक्षत्वेन दुष्टत्वात् । तथाहि प्रयोगः । शिवो न जगत्कारणं पुंस्त्वाद्देवदत्तवदिति ॥

एवं शिवपक्षीकारेण प्रतिपक्षानुमाने प्रयुक्ते शैव आक्षिपति । ननु शिवः केन प्रमाणेन सिद्ध इति । सिद्धान्ती प्रतिप्रश्नं करोति । परिशेषतो जगत्कर्तृत्वं शिवेऽनुमिमानस्य तवापि कुतः सिद्ध इति । लोकप्रवादादिना सिद्ध इति शैवेनोत्तरे दत्ते ममापि तथेत्यस्तु इति प्रत्युत्तरमाह । सिद्धान्त्यभिमते ब्रह्मणि पुंस्त्वरूपहेतुसद्भावेऽपि जगत्कारणत्वाभाव-रूपसाध्याभावेन व्यभिचार इति शैवेन शङ्किते सिद्धान्ती परिहरति । केवलानुमानेन ईश्वरवादिनं प्रति अनीश्वरवादाङ्गीरेण प्रत्यवस्थानाददोष

इति । ‘**अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्य**’ इति भाष्योक्तदिशा भगवन्निष्ठपुंस्त्वस्य अलौकिकत्वात्, हेतूकृतस्य तु लौकिकत्वात् ब्रह्मणि हेतुरेव नास्तीति न व्यभिचार इति सुवचम् ॥ केवलानुमानप्रयोक्त्रा चैवं वक्तुं न शक्यते ॥

ननु जगत्कारणत्वं शिवनिष्ठम्, अन्यत्रानुपपत्तौ सत्यां किञ्चिन्निष्ठतया प्रमितत्वादिति हि परिशेषानुमानम् । अस्य सत्प्रतिपक्षानुमानं जगत्कारणत्वं शिवनिष्ठम् नेत्याकारकं स्यात् । कथं शिवो न जगत्कारणमिति प्रतिपक्षानुमानमिति चेन्न । विरुद्धार्थसाधनमात्रेण प्रतिपक्षसम्भवात् । एकधर्मिकप्रयोगः सत्प्रतिपक्षत्वेऽतन्त्रम् । उक्तं च गङ्गेशोपाध्यायेन ‘ **न पक्षैक्यमपि तन्त्रमविरोधस्यैव दूषकत्वात्, अधिकस्य व्यर्थत्वात्** ’ इति । प्रयोगतोऽपि एकधर्मिनिष्ठतायाः आवश्यकत्वस्य प्रमाणशून्यत्वाच्च । एवमनङ्गीकारे एवंविधार्थिक प्रतिपक्षाणां विरुद्धादिहेत्वाभासेषु अनन्तर्भावेन अदूषणत्वप्रसङ्गः । न चैवमस्त्विति वाच्यम् । प्रतिरोधकत्वस्यानुभवसिद्धत्वात् ॥

नन्वेवं परिशेषानुमानस्य दुष्टतया सामान्यस्य शिवे पर्यवसानाभावे सति कार्यत्वादिहेतुभिः कर्तृत्वसामान्यसिद्धिः न युज्यत इति चेत् न युज्यताम् । सामान्यसिद्ध्यनुमानानां दूषितत्वात् । किञ्च जगत्कारणत्वं ब्रह्मनिष्ठम् अन्यत्रानुपपत्तौ सत्यां किञ्चिन्निष्ठतया प्रमितत्वात् इति ब्राह्ममतावलम्बिना प्रयुक्ते किमुत्तरम् ॥

एवं शैवाद्यागमेन वा स्वतन्त्रानुमानेन वा जगत्कारणस्यासिद्धेः शास्त्रयोनित्वं सिद्धम् । ‘**नावेदविन्मनुते बृहन्तम्**’ ‘**नैषा तर्केण मतिरापनेया**’ ‘**नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति**’ इत्यादि श्रुतिभिरपि सामान्यतो विशेषतश्च जगत्कारणस्य अनुमानावेद्यत्वं सिद्धम् ॥

कार्यत्वादिहेतोः पक्षधर्मताबलाद्वा ईश्वरः सर्वज्ञः सर्वकर्तृत्वात् व्यतिरेकेण कुलालवदिति अन्यस्मादनुमानाद्वा ईश्वरस्य सार्वज्ञादि-सिद्धिरपि अयुक्ता । प्रतिपक्षदुष्टत्वात् । किमिदं प्रतिपक्षानुमानम् । ईश्वरः किञ्चिज्ज्ञः पुंस्त्वात् देवदत्तवत् इति चेत् तत्रेश्वरः प्रमितो वा न वा । आद्ये येन प्रमाणेन सिद्धस्तेनैव सार्वज्ञसिद्धेर्धर्मिग्राहकप्रमाणविरोधः । द्वितीये त्वाश्रयसिद्धिः । तत्कथमेवं प्रतिपक्षानुमानप्रयोगः । अत्रोच्यते । प्रसिद्ध-कर्तृरहितं वनं सकर्तृकं कार्यत्वात्, प्रसिद्धाधाररहितः पर्वतः साधारः गुरुत्वे सत्यपातित्वात् इत्यादिना यो वनादिकर्ता, पर्वताधारको वा सिद्धः तेनैवाकारेण तं पक्षीकृत्य प्रयोगे न कोऽपि दोषः । न हि 'वनकर्ता' इत्येतावता सर्वज्ञ इति लभ्यते । प्रसिद्धवनकर्तुरसर्वज्ञत्वात् । अतो वनकर्तृत्वादिरूपेण सिद्ध ईश्वरो न सर्वज्ञत्वेन सिद्ध इति न धर्मिग्राहक-प्रमाणविरोधः ॥

ननु वनकर्तृरिव क्षित्यादिकर्तृत्वे क्षित्यादिकर्तृरीश्वरत्वात् वनकर्तृरसार्वज्ञ्ये साधिते क्षित्यादिकर्तृत्स्तप्राप्तेरीश्वरस्य असार्वज्ञं स्यात् । तयोर्भेदे वनकर्तृरनीश्वरत्वात् तदसार्वज्ञसाधनं नास्माकमनिष्टमिति चेत् , प्रसिद्धकर्तृशून्यवनकर्तृरीश्वरताया परेण अनिच्छयाऽपि अङ्गीकार्यत्वात् ईश्वरस्यासार्वज्ञं प्राप्नोति । अन्यथा तेनैव न्यायेन वनकर्तरि सिद्धे किमीश्वरसिद्धावायातमित्यापि स्यात् । वनकर्तैव क्षित्यादिकर्तेति तु विचित्रद्रव्यनिर्मातृणां वैचित्र्यस्यैवोचितत्वान्निरस्तमिति ॥

न केवलं किञ्चिज्ज्ञत्वसाधनं सुकरम् । किन्तु स्वकृतकार्याज्ञत्वमपि शक्यसाधनम् । तथाहि प्रयोगः । प्रसिद्धकर्तृरहितवनकर्ता अखिलवृक्षज्ञानी न भवति पुंस्त्वात् चैत्रवत् इति । पूर्ववत् वनकर्तृत्वेन पक्षीकरणात् नापि विरोधः । नापि आश्रयासिद्धिः । 'प्रसिद्धकर्तृरहित' इत्यनेन सिद्धसाधनता-परिहारः । 'अखिल' इत्यस्य आरम्भकावयवसङ्ख्यापलपरिमाणसहितेत्यर्थः।

अनेन अस्मदादिषु अनैकान्त्यपरिहारः । अस्मदादीनां विप्रतिपन्न-वृक्षज्ञानमात्रसद्भावात् । यो यत्कर्ता स सकलं तज्जानातीति नियमाभावेन, विपक्षे वाधकाभावः ।( यद्यखिलज्ञो न स्यात् तर्हि कर्ता न स्यादिति ) कुलालादौ अखिलघटादिज्ञानाभावः प्रसिद्ध एव । अनुपयोगाच्च तज्ज्ञानस्येति ।।

अनेनैव न्यायेन सर्वत्र प्रतिपक्षसम्भवात् सत्यसङ्कल्पत्वअशरीरित्व-नित्यज्ञानेच्छाप्रयत्नवत्त्वदुःखादिराहित्यादिकमपि नानुमानेन साधयितुं शक्यम् ।।

आभाससमानयोगक्षेमं चेश्वरानुमानजातम् । आगमादिसहायसम्पद-मपहाय अत्यन्तातीन्द्रियार्थेऽनुमानां प्रयुज्यमानायामतिप्रसङ्गश्च भवती-त्यर्थः । तथाहि आभासानुमानानि । तुरगः शृङ्गी वस्तुत्वात् गोवत् । खं पुष्पवत् भूतत्वात् भूवत् । चित्रिणी (वन्ध्या) पुत्रवती स्त्रीत्वात् सम्मतवत् । षष्ठो रसः सोत्तरः रसत्वात् प्रथमादिरसवत् इत्यादीनि । तत्र प्रथमाभासानुमानं किञ्चिद्विचार्यते ।।

ननु वस्तुत्वं घटादावनैकान्तिकमिति चेन्न । तस्यापि पक्षत्वात् । पक्षे वा पक्षतुल्ये वा व्यभिचारो नोद्भावनीयः । तुरगशृङ्गादीनामनुपलम्भात् तदस्तित्वसाधने बाध इति चेत् क्षित्यादिकर्तृरप्यनुपलम्भात् बाध एव । क्षित्यादिकर्ता अयोग्यत्वान्नोपलभ्यत इति चेत् तुरगशृङ्गमप्येवमेवास्तु । ननु विषाणं नाम महत्वे सत्युद्भूतरूपवान् शरीरावयवविशेषः । तत्कथमुपलब्ध्य-योग्यः स्यादिति चेत् कर्ताऽपि तर्हि कुलालादिरिव महत्वे सति उद्भूतरूपवान् कथमुपलब्ध्ययोग्यः । क्षित्यादिकर्ता अशरीरत्वान्नोपलभ्यत इति चेत् तुरगविषाणमपि अरूपवत्त्वान्नोपलभ्यते । विषाणं रूपवदेवेति चेत् कर्ताऽपि शरीरवानेव । शरीरं कर्तृत्वेऽनुपयुक्तमिति चेन्न । किमुपयोगेन । तदभिन्नयोः कार्यकारणयोश्च व्याप्तिः (**तत्तादात्म्यं वा**

**तदुत्पन्नत्वं वा तत्प्राप्यत्वे निमित्तम् नान्यत्** ) इति बौद्धमतम् । न तथा भवतां प्रकृते पूर्वपक्षिणां तार्किकाणाम् । तथा च नित्यज्ञानेच्छाकृतिषु शरीरस्याजनकत्वेऽपि चैत्रादावन्यत्र व्याप्तिदर्शनेनेहापि व्याप्तिबलात् स्यादेव शरीरम् । धर्मादिमत्त्वं शरीरित्वे प्रयोजकमिति चेन्न । तस्यापि कर्तृत्वेन साधनादिति । तथा च कार्यत्वानुमानस्य आभाससमान-योगक्षेमत्वं दुर्निवारम् । तथा च प्रयोगः अनुमानत्वं यदि कार्यत्वादौ वर्तेत तर्हि वस्तुत्वादावपि वर्तेत तदविशेषादिति ॥ ननु विचारशास्त्रमारभ्य जगत्कारणेऽनुमानानामनवकाशोत्पादनं व्याहतमिति चेन्न । आगमानुग्रहे हि कार्यत्वादीनि सर्वाणि अनुमानान्येव पक्षधर्मतादिनामङ्गाना-मपौरुषेयतया स्वतः प्रमाणेन शास्त्रेण सिद्धेः । प्रतिपक्षादीनां च तद्विरोधेन बाधादिति ॥ तदेवं जगत्कारणत्वस्य शास्त्रैकसमाधिगम्यत्वात् नानुमानादिना लक्षणस्य अतिव्याप्तिकथनं युक्तमिति सिद्धम् ॥

परकृतापव्याख्याननिरासार्थमुत्तरग्रन्थः । अद्वैतवादिनः 'शास्त्रस्य योनिः' इति व्याचक्षते । तदनुपपन्नम् । प्रकृतानुपयोगात् । पूर्वसूत्रोक्तजगत्कारणत्वे शास्त्रकारणत्वं हेतुरिति तेषामभिमानः । किन्तु न शास्त्रकारणत्वं जगत्कारणत्वे हेतुः । यः शास्त्रकर्ता स जगत्कर्ता इति व्याप्त्यभावात् । वेदादिप्रणेतुरन्यस्याभावेन दृष्टान्ताभावादिति भावः । पूर्वसूत्रे जगत्कारणत्वेन प्रतीतं सार्वज्ञं ब्रह्मणो वेदकारणत्वेन स्फुटीक्रियते इति चेन्न । वेदस्यापि सकलजगदन्तर्भावात् । तथा च कथमनन्त-पदार्थात्मकस्य प्रपञ्चस्य कर्तृत्वेन न स्फुटं तदेकदेशवेदकारणत्वेन स्फुटीभविष्यति सार्वज्ञम् । ननु न पूर्वसूत्रेणार्थतो लब्धस्य सार्वज्ञस्य स्फुटीकरणार्थमिदं येनोक्तदोषः स्यात् । किन्तु प्रधानादिव्युदासेन जगत्कारणत्वं ब्रह्मण्येव साधयितुं हेतुत्वेनोक्तं सार्वज्ञं शास्त्रयोनित्वेन साधयितुमिदम् । अतः सार्वज्ञस्यैव विशिष्य साधनमुपपन्नमिति चेन्न ।

असिद्धिप्रसङ्गात् । तथा हि त्वया एवं प्रयोक्तव्यम् । 'ब्रह्म जगत्कारणं सर्वज्ञत्वात् व्यतिरेकेण प्रधानादिवत् ' ,'ब्रह्म सर्वज्ञं शास्त्रयोनित्वात्' इति । न हि ब्रह्मणो जगत्कारणत्वमनङ्गीकुर्वाणो वेदकारणत्वमङ्गीकरोतीति कथं नासिद्धिः । आगमेन वेदकारणत्वं साध्यते इति चेत्तर्हि जगत्कारणत्वमेव आगमेन किं न साध्यते ॥

किञ्च प्रधानादिव्युदासेन जगत्कारणत्वं ब्रह्मण्येव साधयितुमिदं सूत्रं चेत् ईक्षत्यधिकरणेन पुनरुक्तता स्यात् । तत्रापि अद्वैतभाष्यरीत्या ईक्षण-रूपहेतुना प्रधानकारणत्वनिरासात् । **'आनुमानिकमप्येकेषाम्'** इत्यधिकरणेनापि पुनरुक्तता स्यात् । तत्रापि प्रधानकारणत्वनिरास इति अद्वैतिनामभिमानात् ॥

जगत्कारणत्वेन सर्वज्ञत्वं न सिध्यति वेदाकर्तृत्वात् इति शङ्का स्यात् । तत्परिहारार्थं शास्त्रयोनित्वमुक्तमिति चेन्न । तथा सति अस्मिन् सूत्रे वेदानां कर्ता इति प्रतिज्ञामात्रं स्यात् । वेदकारणत्वे हेतोरनुपन्यासात् । तथा च नोक्तशङ्कायाः परिहारोऽनेन स्यात् । किञ्च वियदादिविषयेऽपि एवमेव शङ्काप्रसङ्गः । जगत्कारणत्वेन सर्वज्ञत्वं न सिध्यति वियदादिकर्तृत्वाभावे इति । साऽपि वियदाधिकरणादौ निराकरिष्यते इति चेन्न । तर्हि **'यावद्विकारं तु विभागः'** इत्यादिसूत्रोक्तैः भिन्नत्वादि - साधारणहेतुभिः ब्रह्मेतरसर्वानित्यताया वियदधिकरणादौ प्रतिपादनेन तेनैव तच्छङ्कानिवृत्तेः तदर्थत्वे तेनास्य गतार्थता स्यात् ॥

किञ्च वेदकर्तृत्वाभावे सार्वज्ञं न सिध्यतीति आशङ्क्य हि पूर्वोक्त-समाधानत्रयमुक्तं परवादिना । वस्तुतः इयं शङ्कैव निर्मूला । न हि तत्कर्त्रैव तज्ज्ञातव्यमिति नियमोऽस्ति । **'वेदान्तकृत् वेदविदेव चाहम्'** इति भगवता स्वयम् 'अहं वेदविदेव न तु वेदकर्ता' इत्युक्तत्वात् 'ब्रह्म सर्वज्ञं वेदकर्तृत्वात्' इति साधनेऽसिद्धिश्च ॥

किञ्च वेदकर्तृत्वं कथं सार्वज्ञसाधकम् । यो यावदर्थप्रतिपादकस्य प्रणेता स ततोऽप्यधिकमर्थं जानात्येव । यथा पाणिन्यादिः । अयं चाशेषार्थप्रतिपादकशास्त्रस्य प्रणेतृत्वात् कथं न सर्वज्ञ इति चेन्न । किमिदं वेदप्रणेतृत्वं नाम । किं प्रमाणान्तरेणार्थमुपलभ्य स्वेच्छया प्रबन्धकर्तृत्वं किं वोच्चारणमात्रम् । अर्थं बुद्ध्वा शब्दरचनमिति प्रथमपक्षे वेदानां पौरुषेयत्वापत्तिः । द्वितीये सार्वज्ञ्यासिद्धिः । उपाध्यायवत् ॥

वेदप्रणेतृत्वं नाम वेदारोपाधिष्ठानत्वमिति चेत् कथं तर्हि पाणिन्यादि - दृष्टान्तः । न हि पाणिनावारोपितं व्याकरणम् । ब्रह्मण्यारोपितो वेद इत्यनेन कथं सार्वज्ञसिद्धिः । ब्रह्मणो विज्ञानशक्तिः शास्त्रस्य विवर्तोपादानम् । आरोपाधिष्ठानमिति यावत् । अत आरोप्ये वेदे विज्ञानजनकत्वादधिष्ठानेऽपि ब्रह्मणि विज्ञानशक्तिः सत्यभूता अङ्गीकार्येति सार्वज्ञसिद्धिरिति चेन्न । वियदादेरपि शास्त्रस्येव तस्मिन्नेव ब्रह्मणि आरोपित्वात् शास्त्रस्येव तस्यापि अर्थप्रकाशकशक्तिप्रसङ्गात् । आरोप्यगता शक्तिरधिष्ठानेऽवश्यमङ्गीकर्तव्येत्यत्र दोषान्तरमपि । अविद्याया ब्रह्मणि आरोपितत्वादविद्यागतावरणादिशक्तेरपि ब्रह्मणि तात्त्विकत्वप्रसङ्ग इति ॥

किञ्च वेदे ज्ञानकरणत्वशक्तिर्ब्रह्मणि च तत्कर्तृत्वशक्तिरिति किं केन सङ्गतम् । न च बोधकत्वमात्रमुभयानुगतमिति वाच्यम् । एकत्र बोधकत्वं नाम तत्कारणत्वमेव । अपरत्र तत्कर्तृत्वमेवेति अर्थभेदे सति शब्दसाम्यमात्रस्य अप्रयोजकत्वात् ॥

किञ्च प्रसिद्धोपादानोपादेययोरेकशक्तिमत्त्वस्य दर्शनेऽपि विवर्तोपादानोपादेययोरेकशक्तिमत्त्वं कुत्रोपलब्धम् । अतः आरोपितवेदस्य ज्ञानजननशक्तिमत्त्वेऽपि अधिष्ठानभूतब्रह्मणो विज्ञानशक्तिर्न सिध्यति । अतः परोक्तमपव्याख्यानमेव ॥ अत उक्त एव सूत्रार्थः ॥

**॥ इति शेषवाग्वज्रे शास्त्रयोनित्वाधिकरणम् ॥**

# ॥ समन्वयाधिकरणम् ॥

## ॥ ॐ तत्तु समन्वयात् ॐ ॥

पूर्वाधिकरणे जगत्कारणं शास्त्रैकसमधिगम्यमिति यदुक्तं तदस्तु । तथाऽपि शास्त्रत एव हरहिरण्यगर्भादीनां प्रधानादीनां च जगत्कारणत्वं प्रतीयते । तथाहि श्रुतयः । **'एको रुद्रो न द्वितीयाय तस्थे', 'हिरण्यगर्भः समर्वताग्रे' 'जीवाद्भवन्ति भूतानि'** इत्यादयो हरादिचेतनानां जगत्कारणत्वप्रतीतिकाः । **'प्रधानादिदमाविरासीत्' 'प्रधानादिदमुत्पन्नम्'** इत्यादयः प्रधानादि जडानां जगत्कारणत्वप्रतिपादिकाः । एवं कालकर्मादीनामपि जगत्कारणत्वप्रतिपादकश्रुतयो गवेषणीयाः ।

भगवत्पादैः ता अपाकर्तुम् । ' **न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः** ' इति जगदे ।

ननु न प्रतीतिमात्रादर्थसिद्धिः, तथात्वे **'यजमानः प्रस्तरः'** इत्यादौ ऐक्याद्यर्थत्वप्रसङ्गात् । किन्तु वाक्यतात्पर्यविषयत्वादेव । हरादीनां प्रधानादीनां च जगत्कारणत्वप्रतिपादकं शास्त्रं विष्णुपरमिति न वाच्यम् । अभियुक्तैः पशुपत्यादिभिः शिवादिपरत्वेन व्याख्याततत्वात् ॥

यद्यपि 'नामाणि सर्वाणि यमाविशन्ति' इत्यादि श्रुत्या शिवादिनाम्नां विष्णौ शक्तिरस्तीत्येवावसीयते । तथाऽपि विष्णौ तात्पर्यमस्तीत्यत्र न प्रमाणमस्ति । उपक्रमादिकं हि प्रमाणतया वक्तव्यम् । तत्तु न तात्पर्यनिर्णायकम् । अन्योन्यं बलाबलनिर्णयासम्भवात् । तात्पर्याभावे शक्तिविषयत्वमात्रेण शब्दार्थत्वमिति नाशङ्कनीयम् । **'यत्परः शब्दः सशब्दार्थः'** इति हि न्यायः । प्रमाणान्तराभावेऽपि शक्तिरेव तत्र मानमस्तु इति च नाशङ्कनीयम् । शक्तिमात्रेण तात्पर्यकल्पनेऽतिप्रसङ्गात् । तथा हि 'गङ्गायाम् घोषः' इत्यत्र 'गङ्गा' इति प्रवाहे शक्तिसद्भावात् प्रवाहे तात्पर्यकल्पनाप्रसङ्गः । तर्हि शिवादयस्तच्छब्दवाच्या इत्यत्र तात्पर्यं

कुतोऽवगतमिति चेत् तत्र तात्पर्यज्ञापकाभियुक्तव्याख्यानसद्भावादेव ॥ तस्माच्छास्त्रत एव जगत्कारणत्वं शिवादिषु आगतमिति नैतल्लक्षणं भवितुमर्हति इति पूर्वपक्षः ॥

सिद्धान्तस्तु । तात्पर्यनिर्णायकं नास्तीति यदुक्तं तन्न । उपक्रमादीनां तात्पर्यनिर्णायकाभावात् । उपक्रमादय एव अन्वयनामानः । अन्वीयन्ते एतैः इति अन्वयाः । अनुपूर्वात् 'इण् गतौ' इत्यतः 'करणे एरच्' इत्यच्प्रत्यये रूपम् । अन्वीयन्ते शक्तितात्पर्यगोचरेण सम्बध्यन्ते । तथा ज्ञायन्ते वाक्यानि एतैरिति अन्वयाः । अत्रोपक्रमादिप्रसिद्धपदं परित्यज्य यौगिकान्वयपदग्रहणकर्तुर्भगवतः सूत्रकारस्यायमभिप्रायः । न शास्त्र-तात्पर्यावगतावापातप्रतीतिर्वा व्याख्यातृवचनं वा लिङ्गम् । किन्तु उपक्रमादय एव । तेषां तात्पर्याव्यभिचारित्वात् । प्रतीतिव्याख्यानयोस्तु व्यभिचारित्वात्। ननु एतदयुक्तम् । वेदस्य विष्णुकारणत्वे यत्तात्पर्यं तदव्यभिचारित्वदर्शनात् प्रतीतेः पञ्चरात्रादिव्याख्यानस्येति चेत् तत्रापि अव्यभिचारो न स्वतः । किन्तु उपक्रमाद्यनुसन्धानपूर्वकत्वेनैव । अतः उपजीव्यत्वादुपक्रमादीनामेव तात्पर्यलिङ्गत्वमिति ॥

तदेवम्भूतैरुपक्रमादिभिः सम्यक् शास्त्रैः प्रविचारिते सति भगवान् विष्णुरेव सर्वशास्त्रार्थः नापर इति निश्चेतुं शक्यते । सम्यक् प्रविचारणं नाम उपक्रमादीनां श्रुत्यादीनां च सन्निकर्षविप्रकर्षाभ्यां सावकाशत्वादिना च बलाबलविनिश्चयपुरस्सरं विरोधे बलवता दुर्बलबाधया वाक्यार्थविमर्शः ॥ तथा च उपक्रमादिमात्रस्य लिङ्गत्वेनानुक्तत्वात् किन्तु सम्यक् प्रविचारलक्षणावान्तरव्यापारोपेतोपक्रमादीनामेवोक्तत्वात् प्रतीतिव्याख्यानवदुपक्रमादीनामपि कचित्तात्पर्यव्यभिचारदर्शनात् कथं लिङ्गत्वमिति नाशङ्कनीयम् ॥

संशब्दस्य सम्यगिति मुख्येति सर्वेति त्रयोऽर्थाः । तथा चैवं

सूत्रयोजना । अन्वयादुपक्रमादिलिङ्गसमुदायात् शास्त्रे सम्यक् प्रविचारिते सति सर्वशास्त्रस्य सम्यग्वचनवृत्त्याऽन्वयात् शक्तितात्पर्यलक्षण-सम्बन्धावगमात् तत् विष्ण्वाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शब्दयोनि न तु हरहिरण्यगर्भादय इति । संशब्दस्यावृत्तिरेवमुपपद्यते । अनन्तगुण-परिपूर्णत्वं हि प्रधानलक्षणम् । तत्र च शास्त्रं प्रमाणीकृतम् । यदि शास्त्रं लक्षणादिना विष्णौ प्रकृतं तर्हि वाच्यार्थगुणालाभात् वाच्ये तद्गुणप्रसङ्गाच्च सर्वं मुख्यवृत्त्यपरपर्यायवचनवृत्त्या प्रवृत्तमेव युक्तम् ॥ एवं कतिपय-वाक्यैरनन्तगुणप्रतिपादनात् वाक्यान्तरविषयस्य च तद्गुणत्वप्रसङ्गाच्च सर्वशास्त्रसमन्वयमेव युक्तमिति ॥

सूत्रे 'तत्' शब्दस्य सार्थक्यमित्थम् । तत्रेयमाशङ्का । 'जन्माद्यस्य यतः' इति यच्छब्दश्रवणात् 'तद् ब्रह्म' इति प्रकृतम् । तदेवात्र मण्डूकप्लुतिन्यायेन अनुवर्तिष्यते । किं पुनरत्र तद्ब्रह्मणेनेति । अत्रोत्तरम् । तुशब्दस्तावदत्र इतरव्यावृत्त्यर्थमुपादेयः । **'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे'** इत्युक्तेः । **'यतोऽवधारणं ततोऽन्यत्र निषेधः'** इति वचनाच्च । न च तस्य तुशब्दस्य 'तत्' इत्यनुक्तौ अन्वयः प्रतीयते । न च अनुवृत्तेनान्वयप्रतीति-र्भविष्यतीति वाच्यम् । श्रुतेनान्वयादित्यनेनैव सम्बन्धप्रतीतिप्रसङ्गात् । तत्र तुशब्दान्वयस्य उपयोगाभावान्नेति चेन्न । 'अन्वयादेव' इत्यस्य प्रतीति-व्याख्यानाभ्यां 'न ' इति निरासार्थत्वोपपत्तेः । **'शक्तितात्पर्य-प्रतिपादकत्वेन वाक्यान्येतैर्ज्ञायन्ते'** इत्युक्तरीत्या यौगिकान्वयपदादेव अव्यभिचारसूचनेन व्यभिचारिणोः प्रतीतिव्याख्यानयोर्निरासोऽर्थात् सिद्ध्यतीति चेन्न । अन्वयपदस्य उपक्रमादीनां लिङ्गत्वप्रतिपादन एव चरितार्थत्वसम्भवात् । अतः सार्थकं सूत्रे तद्ग्रहणम् ॥

'संशब्देन सकलपदानां लक्षणया ब्रह्मप्रातिपादिकार्थमात्रपरत्वमुच्यते' इति व्याख्यानमसत् । जन्माधिकरणे अखण्डार्थत्वनिरासात्,

ईक्षत्यधिकरणे भक्तिपादे च लक्षणायुक्तेर्वक्ष्यमाणत्वाच्च ॥

तदेवं जगज्जन्मादिकारणत्वेन मुख्यया वृत्त्या वर्णपदवाक्यात्मकाशेष शास्त्रप्रतिपाद्यं नारायणाख्यं ब्रह्मैवेति सुस्थं लक्षणम् ॥

**॥ इति समन्वयाधिकरणं सम्पूर्णम् ॥**

# ॥ अथ ईक्षत्यधिकरणम् ॥

वचनवृत्त्यैव सकलशास्त्रप्रतिपाद्यं ब्रह्मेत्यतीताधिकरणे उक्तम् । तदाक्षिप्य समाधातुमिदमाधिकरणमारभ्यते ॥

तत्रायं पूर्वपक्षः । **'यतो वाचो निवर्तन्ते' 'अशब्दमस्पर्शम्'** इत्यादिश्रुतेः **'शब्दो न यत्र पुरु कारकवान्'** इत्यादि स्मृतेश्च ब्रह्म अवाच्यमवसीयते । स्मृतिवाक्यस्य **'यत्र** विषये **शब्दः पुरु** साकल्येन **कारकवान्** प्रतिपादकत्ववान् **न'** इत्यर्थः । अत्रैव युक्तिश्च । वचनवृत्तिर्द्रव्य-गुणक्रियाजातिनिमित्ता । न च ब्रह्मणो द्रव्यत्वादिरस्ति । **'केवलो निर्गुणश्च' 'निष्कलं निष्क्रियं शान्तम्'** इत्याद्यागमात् । तत्कथं तस्य वाच्यता सम्भवतीति । औपनिषदत्वान्नावचेननेक्षणमिति न वाच्यम् । लक्षणया वृत्त्या औपनिषदत्वस्य सम्भवात् । अतोऽवाच्यत्वाद्ब्रह्मणो न वचनवृत्त्या शास्त्रगम्यत्वमिति ॥

अपरः पूर्वपक्षः । न सर्वशास्त्रप्रतिपाद्यत्वं ब्रह्मणः सम्भवति । निश्चयो-पायाभावात् । उपक्रमादयो हि तन्निश्चयोपायाः । तैश्चास्मदाद्यधिगतस्य कतिपयशाखात्मकशास्त्रस्य कथञ्चिद्ब्रह्मविषयतावधारणेऽपि अस्मदनधिगत-शास्त्रस्य तत्परतावधारणायोगात् । स्वरूपस्यैवानवधारणे तदुपक्रमाद्य-वधारणस्य दूरोत्सारितत्वात् । **'अनन्ता वै वेदाः'** इति श्रुतेरनन्तं शास्त्रमिति ज्ञायते । न चानन्तशास्त्राधिगमोऽस्माकं कल्पकोटिशतैरपि सम्भवति । तर्हि एकदेशनिर्णयेनालमिति न मन्तव्यम् । शास्त्रैकदेशस्य ब्रह्मपरत्वाध्यवसायस्य विफलत्वात् । एकदेशान्तरे तद्विपरीतप्रतिपादनस्यापि शङ्कनात् शास्त्रैकदेशस्यापि ब्रह्मपरत्वाध्यवसाय्योऽयुक्तश्च । ततश्च एकस्मिन् वस्तुनि विकल्पायोगात् एकादेशाधिगतेऽपि वस्तुनि सन्देहः समास्कन्दतीति ॥

एवं पूर्वपक्षाभ्यां सर्वशास्त्राप्रामाण्याज्जगज्जन्मादिकारणं समस्तगुण-

परिपूर्णं ब्रह्मेति न सिद्ध्यति इति फलिताभिप्रायः ॥

तत्राद्यः पूर्वपक्षस्तावन्निराक्रियते । द्वितीयस्तु उपसनापादे निराकरिष्यते । ब्रह्म वाच्यं भवितुमर्हति । न पुनरवाच्यम् ईक्षणकर्मत्वाद्धटवत् । न चासिद्धिः । **'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' 'आत्मन्येवात्मानं पश्येत्' 'आत्मा वाऽरे द्रष्टव्यः' 'विज्ञाय प्रज्ञां कुर्वीत'** इत्यादि श्रुतेः ।

ब्रह्म ईक्षणीयं भवतु, वाच्यं मास्त्विति चेन्न । ब्रह्मणो वाच्यत्वाभावे ईक्षणीयत्वं न स्यात् । तथा च ब्रह्मज्ञानाभावेन शास्त्रवैयर्थ्यमनिर्मोक्षश्च स्यात् इति सिद्धान्तिनोक्ते पूर्वपक्षी एवं वदति । यदि ब्रह्म अवाच्यं स्यात् तर्हि ईक्षणीयं न स्यादित्यापादयितुं न शक्यते । आपाद्यापादकयो-र्व्याप्त्यभावात् । तथाहि वाच्यत्वाभावेनापादकेनेक्षणीयत्वाभाव आपाद्यम् । वाच्यत्वस्याव्यापकत्वादीक्षणीयत्वस्याव्याप्यत्वान्नैवमेवमापादयितुं शक्यते । न हि अव्यापकनिवृत्तिरव्याप्यनिवृत्तिमापादयितुं शक्नोति । ईक्षणीयत्वं हि प्रत्यक्षानुमानागमतदाभासनिमित्तं व्यापकं युक्तम् । वाच्यत्वं च शब्दवृत्तिविशेषोपाधिकं व्याप्यमेवेति ॥

तत्रेदमुत्तरम् ॥ न तावदिदं मोक्षार्थमुपदिष्टं ब्रह्मेक्षणं प्रमाणाभास-जन्यम् । प्रमाणाभासजन्यस्य भ्रान्तित्वात् । भ्रान्तेश्चाविद्यानिवर्तकत्वात् । नापि प्रत्यक्षानुमानम् । शास्त्रैकसमधिगम्यतायाः साधितत्वात् । अत औपनिषदत्वान्नावचनेनेक्षणम् । तथा च प्रकारान्तराभावे सति यदि ब्रह्म वाच्यमपि न भवेत्तदेक्षणीयमपि न भवेदिति बाधकं सम्भवत्येव । सर्वस्यापि वस्तुनो वाच्यत्वेन यद्वाच्यं न भवति तदीक्षणीयं न भवतीति व्याप्तेर्ज्ञातुमशक्यत्वात् कथमापादनमिति चेत् व्यतिरेकसम्भवात् । यत्रेक्षणीयत्वं तत्र वाच्यत्वं यथा धर्मादीति दृष्टान्तसम्भवात् । यत् यत्कारकाविषयः तत् तत्क्रियाऽविषयः, यथा कुठाराद्यविषयो गगनं न

छिदाविषय इति सामान्यव्याप्तिसम्भवात् । प्रकृते शब्दलक्षणकारकाविषयो ब्रह्म चेत् न तज्जन्येक्षणरूपक्रियाविषय इति व्याप्त्यनुगमात् इति ॥

पुनः पूर्वपक्षी शङ्कते । मा भूत्प्रमाणाभासैः प्रत्यक्षानुमानाभ्यां चेक्षणं ब्रह्मणः , मा च भूद्वाच्यम् । तथापि शब्दलक्ष्यतयेक्षणीयं च भविष्यति । तथा च वाच्यत्वाभावेऽपि ईक्षणीयत्वसम्भवात् अप्रयोजको वाच्यत्वे ईक्षणीयत्वहेतुरिति ॥

तन्न । यतो वाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टम् । तस्मादवाच्यत्वे ब्रह्मणो लक्ष्यत्वाभावाल्लक्षणयाऽपि नेक्षणीयत्वम् । केनचिच्छब्दवाच्यमेव हि तीरादिकं केनचिल्लक्ष्यं दृष्टमिति । तथाहि प्रयोगः । ब्रह्म लक्ष्यं न भवति केनापि शब्देन अवाच्यत्वात् । यल्लक्षणं तत् केनापि शब्देन वाच्यम् । यथा गङ्गापदेन लक्ष्यं वस्तु तीरशब्देन वाच्यमिति ॥

पुनः पूर्वपक्षी शङ्कते । ब्रह्म अवाच्यमस्तु , तथापि लक्ष्यमस्तु इति विपक्षे बाधकाभावादप्रयोजकोऽयं हेतुरिति ॥

तत्रायमुत्तरक्रमः । यद्यवाच्यमपि ब्रह्म लक्ष्यमित्यङ्गीक्रियते तदा किं तदिति जिज्ञासायामनवस्थितिः स्यात् । तथाहि ॥ लाक्षणिको हि शब्दो न श्रुतमात्रोऽर्थान्तरे धियमुपजनयति , तत्रागृहीतशक्तित्वात् । किन्तु वाच्यार्थबुद्धिमुत्पाद्य तदनुपपत्तिदर्शने सति । न तावताऽपि । वाच्यार्थानुपपत्तिदर्शनस्य तत्त्यागमात्रहेतुत्वात् । किं नामार्थान्तरस्य स्वरूपतो वाच्यार्थसम्बन्धितया चावगतौ सत्याम् । गङ्गादिशब्देन हि स्वरूपतो गङ्गादिसम्बन्धितया चावगतमेव तीरादिकं लक्ष्यं दृष्टम् । नानवगतस्वरूपं कूर्मरोमादि । नाप्यन्यसम्बन्धितयाऽवगतं तीरादि । तथाच वैदिकशब्दलक्ष्यत्वे ब्रह्मणः प्रतीतिरङ्गीकार्या । न च तीरादिवत् प्रत्यक्षादिना तस्य प्रतीतिः सम्भवति । ततो लाक्षणिकशब्दे प्रयुक्ते वाच्यार्थेऽनुपपत्तिं पश्यतो लक्षणीयेऽर्थे 'किं तत् ,यदनेन लक्ष्यम्' इति

जिज्ञासायां शब्द एव प्रयोक्तव्यः । तेनापि चेन्न वाच्यं किन्तु लक्ष्यमेव तर्हि पुनः 'किं तत् ' इति जिज्ञासाया अनिवृत्तत्वात् शब्दान्तरमेव वाच्यम् । तत्रापि एवमेवेति अपर्यवसानं स्यात् । पूर्वपूर्वलक्षणाऽसिद्धावुत्तरोत्तरलक्षणाऽसिद्धेर्मूलक्षतिः । यदि च केनचित् शब्देन वाच्यं स्यात्तदा तदुक्तावुपरतजिज्ञासो लाक्षणिकार्थं प्रतीयात् । केनचिदपि शब्देन अवाच्ये पूर्वोक्तरीत्या लाक्षणिकार्थप्रतीतिरेव न स्यात् । तस्माद्विपक्षे अनवस्थालक्षणबाधकसद्भावादवाच्यत्वे लक्षणं न स्यादिति युक्तोऽतिप्रसङ्ग इति ॥

तत्र पूर्वपक्षिणोऽयमाक्षेपः । सिद्धान्तिनोपन्यस्तोऽयं तर्कः स्वव्याघातकः । तथाहि ब्रह्मणो वाच्यत्वेऽङ्गीकृतेऽपि शब्दब्रह्मणोर्वाच्यवाचकसम्बन्धज्ञानस्य शब्दब्रह्मरूपसम्बन्धिज्ञानाधीनत्वात्, शब्दरूपसम्बन्धिनः प्रत्यक्षत्वेऽपि ब्रह्मरूपसम्बन्धिनः औपनिषदत्वेन शब्देनैव पूर्वं तत्सिद्धेर्वाच्यत्वेन तत्राप्येवमित्यनवस्था सुस्था इति ॥

एवं चोदिते सिद्धान्तिना अयमुत्तरक्रमः । वैदिका हि शब्दा न यौगिकाः । यौगिकानां शब्दानां वाक्यतुल्यत्वात् । वाक्यघटितपदानां शक्तिर्येन गृहीता तेन वाक्यार्थज्ञानस्येव यौगिकशब्दार्थस्यापि ग्राह्यत्वसम्भवात् पृथक् तेषां पदानां ब्रह्मणि सङ्गतिग्रहणापेक्षाभावात् नानवस्था । नैवं परेण वक्तुं शक्यम् । ब्रह्मणोऽखण्डस्य असंसर्गभेदरूपतया वाक्यार्थत्वाभावात् ॥

पुनः पूर्वपक्षी शङ्कते । इक्षुक्षीरगुडादीनां माधुर्यास्तावद्भिद्यन्ते इत्यनुभवसिद्धम् । न च ते केनापि शब्देन वाच्याः । तद्वाचकशब्दाभावात् । तथाऽपि लक्ष्या दृश्यन्ते । वाचकशब्दाभावेन लक्ष्यत्वस्याप्यभावे तत्र वाग्व्यवहाराभावप्रसङ्गात् । अतोऽवाच्यत्वे लक्ष्यत्वं न स्यादिति प्रसङ्गः आपाद्यापादकयोर्व्याप्तिरूपमूलशून्यः ॥

**यथोक्तं**

**'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।**
**भेदस्तथापि नाख्यातुं सरस्वत्याऽपि शक्यते' इति ॥**

न केवलमेवं व्याप्तिशून्यत्वं किन्तु या चावाच्यस्य ब्रह्मणो लक्ष्यत्वानुपपत्तिः सिद्धान्तिनामभिमता साऽपि न । अवाच्यत्वेऽपि स्वप्रकाशतया लक्षणाप्रयोजकप्रतीत्युपपत्त्या ब्रह्मणो लक्ष्यत्वोपपत्तेः । यथा खलु माधुर्यादिविशेषणामवाच्यानामपि प्रतीततामात्रेण लक्ष्यत्वं दृष्टं तथेति ॥

अत्रायमुत्तरक्रमः । माधुर्यादिविशेषाः माधुर्यादिविशेषशब्दैर्वाच्या एव । ननु माधुर्यविशेषशब्दः सकलमाधुर्याणां साधारण इति चेत् किमेतावता । यथा घटशब्दः सर्वघटेषु प्रयुज्यमानो नैल्यादिविशिष्टं विशेषं लक्षणयैवोपस्थापयति तथा माधुर्यविशेषशब्दोऽपि सर्वमाधुर्येषु प्रयुज्यमानस्तत्तद्विशेषान् लक्षणेनैवोपस्थापयति । अतो वाचकत्वाभावेऽपि लक्षकत्वात् पुनर्व्यभिचारतादवस्थ्यमित्यभिप्राय इति चेत् -

तदा वक्तव्यं किमत्र साधारणत्वं घटादिशब्दवत् सामान्याकारमात्रवाचकत्वं किं वा गवादिशब्दवदनेकार्थत्वम् । नाद्यः । असिद्धेः । माधुर्यविशेषशब्दस्य माधुर्यविशेषमात्रोपस्थापकत्वानुभवेन सर्वसाधारणसामान्याकारोपस्थापकत्वाभावात् । न द्वितीयः । गोशब्दस्य अनेकार्थत्वेऽपि वाचकत्वाभावस्य अभावेन यत्र साधारणत्वं तत्र वाचकत्वाभाव इत्यस्य व्यभिचारात् । किञ्च गोशब्दस्य सर्वथा वाच्यकत्वाभावे लक्षकत्वमपि न स्यात् । वाच्यार्थद्वारत्वाल्लक्षणायाः ॥

अत्रायमाक्षेपः । वाचकत्वं पदधर्मः । 'माधुर्यादिविशेषाः' इति तु न पदं किन्तु वाक्यमेव । अनेकपदात्मकत्वात् । तथा च कथं माधुर्यादिविशेषशब्दैर्वाच्य इति । समाधानं तु ऐकपद्यमैकस्वर्यं च समासप्रयोजनमिति पाणिनीयैरङ्गीक्रियते । 'ऐकपद्यम्' इत्यस्य एकार्थीभाव

इत्यर्थः । तथा चानेकपदघटितसमासे एकार्थबोधकत्वेन ऐकपद्यमङ्गीकृतम् । अतो युक्तं समस्तपदस्य वाचकत्वमिति ॥

समाधानान्तरम् ॥ माधुर्यादिविशेषाणां वाचकशब्दाः सूदशास्त्रादिप्रसिद्धाः । तथा चोक्तं भगवत्पादैरैतरेयभाष्ये ।

**'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।**

**गुडस्य पनसादीनां निर्हारीत्यभिधीयते'** ॥ इति ।

यथा ध्वनिविशेषाणां वाचकाः श्रुतिस्वरजातिरागादिशब्दाः मन्दैरविदिता अपि सङ्गीतशास्त्रप्रसिद्धास्तथेति भावः । ततश्च 'इक्षुक्षीरगुडादीनाम्' इति वचनमात्मनो व्युपत्त्यभावख्यापनार्थं शारदानिन्दया प्रत्यवायार्जनार्थं च । अतोऽवाच्यत्वे लक्ष्यत्वं न स्यादिति अतिप्रसङ्गो न प्रशिथिलमूलः ॥

यदपि स्वप्रकाशतया सिद्धत्वाद् ब्रह्मणो लक्ष्यत्वोपपत्तिरिति तदेतधिकरणान्ते निराकरिष्यते ॥

पुनः पूर्वपक्षी शङ्कते । 'नदी तीरे पञ्च फलानि सन्ति' इति वाक्यस्य अर्थः नदीतीरफलसंसर्गरूपोऽवाच्योऽपि नद्यादिपदैरुपलक्ष्यते । अत्र भट्टसम्मतिरप्यस्ति । यथोक्तम् **'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः'** इति । तथा च वाच्यत्वाभावे लक्ष्यत्वं न स्यादिति प्रसङ्गो व्याप्त्यभावादप्रयोजकः । वाक्यार्थश्च ब्रह्मेत्यभ्युपेयते न पदार्थः । अतो लौकिकवाक्यार्थवदवाच्यमपि लक्ष्यं किं न स्यादिति ॥

अत्रोत्तरम् । यदि वाक्यार्थशब्दो वाक्यार्थावाचकस्तर्हि अन्यत्तद्वाच्यं वक्तव्यम् । न ह्यस्माभिर्लक्षकेनैव शब्देन वाच्यत्वमाशास्यते । किन्तु केनचिच्छब्देन वाच्यमेव केनच्छिब्देन लक्ष्यमिति । अतो वाक्यार्थोऽपि वाक्यार्थशब्देनैवोदित इति तस्य वाच्यत्व एव अन्यशब्दलक्ष्यत्वमायातं न त्ववाच्यत्वे ॥

अयं चाङ्गीकारवादः । **'शक्तिश्चैवान्विते स्वार्थे'** इति जिज्ञासा-नयोक्तदिशा पदानामेव पदार्थेऽन्वयरूपवाक्यार्थे च शक्तेः समर्थितत्वात् । वाक्यार्थश्च ब्रह्म अभ्युपेयत इति पूर्वपक्षिणा यदुक्तं तदपि न । अखण्डत्वभङ्गभिया ब्रह्मणो वाक्यार्थत्वं पूर्वपक्षिणा नाङ्गीकर्तुमुचितम् । वाक्यार्थत्वस्य संसर्गरूपत्वात् संसृष्टरूपत्वाद्वा । ब्रह्मणः संसर्गत्वस्य वा संसृष्टत्वस्य वाऽनङ्गीकारात् । ननु वाक्यार्थोऽखण्ड एव । अतो न दोष इति चेन्न । वाक्यस्याखण्डार्थनिष्ठत्वस्य निरस्तत्वादिति ॥ एवं व्यभिचारा-भावात् सुस्था प्रसङ्गमूलभूता व्याप्तिः ॥

किञ्च ब्रह्मणोऽवाच्यत्वे तस्य वस्तुत्वमेव न स्यात् । यथोऽवाच्यं किञ्चिदपि नास्ति ॥

पुनः पूर्वपक्षी शङ्कते । **'यतो वाचो निवर्तन्ते'** इत्याद्यागमविरोधात् ईक्षणीयत्वेन वाच्यत्वसाधनं कालात्ययापदिष्टम् । अवाच्यत्वे लक्ष्यं न स्यादित्यादि प्रसङ्गश्च विपर्ययेऽपर्यवसायीति ॥

अत्रेदं समाधानम् । स्यादेतदेवं यदि ब्रह्मवाच्यत्वं श्रुत्यर्थः स्यात् । न चैवम् । तथा व्याख्याने स्वक्रियाविरोधापत्तेः । तथाहि । यत इत्यादिशब्दैर्ब्रह्मोक्त्वा तस्यावाच्यत्वं वाच्यम् । अन्यथा यस्य कस्यचिद् ब्रह्मणोऽन्यस्य अवाच्यताऽऽपत्तेः । तथाच 'यत्' इत्यादिशब्दैर्ब्रह्मेव वदन् कथं पुनस्तस्यावाच्यत्वं श्रुत्यर्थतया ब्रूयात् । एवं वदतः 'मूकोऽहम्' इति वदत इव स्वक्रियाविरोध इति ॥

एवं सिद्धान्तिना चोदिते पूर्वपक्षी पुनः शङ्कते । स्यादेवं स्वक्रिया-विरोधो यदि 'यतः' इत्यादिशब्दैर्ब्रह्म वचनवृत्त्योक्त्वा तस्यावाच्यत्वमुच्यते । न चैवम् । किं नाम ब्रह्म 'यत्' इत्यादि शब्दैर्लक्ष्यमेवेत्यतः क्वास्ति स्वक्रियाविरोध इति ॥

अत्रेदमुत्तरम् । 'ब्रह्म लक्ष्यम्' इति वदताऽपि ब्रह्मणो

लक्ष्यशब्दवाच्यत्वमङ्गीकार्यम् । तथा च किं शब्दन्तरेणापराद्धम् । अथ लक्ष्यशब्देनापि लक्ष्यते न तूच्यत सति ब्रूयात्तदा 'किं तत् ' इत्यपेक्षायां शब्दान्तरं ब्रूयात् । तत्राप्येवमेवेत्यनवस्था स्यात् ॥

अथ यावत्पदजातं ब्रह्मणि प्रयुज्यते तत्सर्वमपि लक्षणयैवेति परिहारे कुतोऽनवस्थेति चेन्न । अस्मदुक्तिभावानवबोधात् । न हि वयं प्रश्नपरिहार-क्रमनिमित्तामिमामनवस्थामुद्भावितवन्तो येन सकृदेवोत्तरेण कृतार्थो भवेः , किन्तु लक्षणायाः प्रतीतिपूर्वकत्वात् शब्देन विना प्रत्यायकान्तराभावात् तत्रापि लक्षणाऽऽश्रयणेऽपर्यवसायिलक्षणापरम्पराप्राप्त्या मूलभूताया ब्रह्मशब्दलक्षणायाः कर्तुमवकाशाभावेन मूलक्षतेरनवस्थादोषः सुस्थिरः ॥

अतः स्वक्रियाविरोधान्नेदं श्रुतिव्याख्यानमिति नानुमानस्य कालात्ययापदिष्टता, नापि प्रसङ्गानां विपर्ययापर्यवसानम् । अवाच्यत्व-वादिश्रुतेरविरुद्धं व्याख्यानम् । **'अद्भुतत्वादवाच्यं तत्'** इति उत्तरत्र क्रियते इति ॥

इतश्च न ब्रह्मणि श्रुतानां वैदिकानां सर्वशब्दानां लक्षणाश्रयणं युक्तम्। यतः वेदे विदुषामेकस्यापि शब्दस्य मुख्यार्थपरित्यागेनामुख्यार्थस्वीकृतौ महती लज्जा जायते । एवम्भूते वेदेऽखिला अपि शब्दा अमुख्यार्था इति वदन् यःकोऽपि स्वस्य शब्दशक्तितात्पर्यज्ञत्वं यदि मन्येत तर्हि कथं न तस्य लज्जा जायते ॥

ननु न तावन्मुख्यार्थपरित्यागेनामुख्यार्थ स्वीकार एव लज्जाहेतुः । तथा सति लोके **'गङ्गायां घोषः'** इत्यादौ, वेदे **'कुण्डपायिनामयने मासमग्निहोत्रं जुहोति'** इत्यादौ अमुख्यार्थग्रहणाभावप्रसङ्गः । 'गङ्गायां घोषः' इत्यत्र गङ्गापदेन प्रवाहरूपमुख्यार्थपरित्यागेन तीररूपामुख्यार्थ-स्वीकारः प्रसिद्ध एव । कुण्डपायिनामयनं नाम सत्रयागविशेषः । तत्रैकमासं क्रियमाणकर्मविशेषस्याग्निहोत्रमिति नाम । तत्र अग्निहोत्रमिवाग्निहोत्रमिति

गौणीवृत्तिमाश्रित्य मुख्यार्थभूतप्रसिद्धाग्निहोत्र-त्यागेन गौणार्थग्रहणं कृतम् । अतो मुख्यार्थे सम्भवत्येवामुख्यार्थस्वीकारो दोषाय ॥ मुख्यार्थो हि शक्तिग्रहणवशात् प्रथमं बुद्ध्यारूढो भवति । प्रथमातिक्रमे कारणं विना जघन्यार्थस्वीकारेऽनौचित्यं भवेदेव । यत्र तु मुख्यार्थे बाधकमस्ति तत्र तदपरित्याग एव लज्जाहेतुः । 'गङ्गायां घोषः' इत्यादि लाक्षणिकप्रयोगे 'सिंहो देवदत्तः' इत्यादिगौणप्रयोगे च मुख्यार्थस्वीकार एव दोषः । तत्कथमेतदापादनमिति चेत् सत्यमेवैतत् । प्रकृतेऽपि मुख्यार्थस्वीकारे बाधकं नास्ति । बाधिकायाः **'यतो वाचः'** इत्यादिश्रुतेः अवाच्यत्वसाधक-निर्गुणत्वरूपोपपत्तेश्च निराकृतत्वादिति ॥

ईक्षणीयत्वात् ब्रह्म वाच्यमित्येतावता प्रबन्धेनोक्तम् । तत्रेक्षणीयत्वहेतोर्व्यधिकरणासिद्धिं शङ्कते मायावादी । तथा हि । द्वे ब्रह्मणी । निर्गुणं सगुणं च । तत्र निर्गुणं नित्यं जडामिश्रं ज्ञानस्वभावं मुक्तस्वभावं परिपूर्णम् । तदेव मायाशक्तित्वेन ऐश्वर्यादिधर्मवत् सत् सगुणमुच्यते । मायायाश्च अनिर्वाच्यतया तदवच्छिन्नस्य सगुणब्रह्मण ऐश्वर्यादिधर्मवत्ता न तात्त्विकीति ब्रह्मणो न कूटस्थत्वहानिः । न ह्यारोपितनीलिम्ना गगनस्य नीरूपत्वमपैति । तत्र सगुणमेव **'परात्परं पुरिशयं पुरुषमीक्षते'** इत्यादौ ईक्षणीयत्वेनोच्यते । ततश्चेक्षणीयत्वं वाच्यत्वे नोपपद्यते चेत् सगुणं वाच्यमस्तु न निर्गुणम् । तस्येक्षणीयत्वे प्रमाणाभावात् ॥ न ह्यन्यगतेन व्याप्येनान्यत्र व्यापकसिद्धिः । तथा सति पर्वतगतेन धूमेन महाह्रदेऽग्निः सिध्येत ॥

(ब्रह्म वाच्यमीक्षणीयत्वादित्यत्र ईक्षणीयत्वं सगुणे एव न निर्गुण इति निर्गुणब्रह्मणो वाच्यत्वेऽनुमीयमाने व्यधिकरणासिद्धो हेतुरिति शङ्कितुरभिप्रायः) ॥

'परात्परम्' इत्यादीन्येव निर्गुणब्रह्मण ईक्षणीयत्वप्रतिपादकानीति न

वाच्यम् । तत्र ज्ञापकाभावात् । ईक्षणीयत्वानुमानेन निर्गुणस्य वाच्यत्वासिद्धावपि **'सर्वे वेदा यत्पदमामनन्ति'** इत्यादि श्रुतिबलात् वाच्यत्वं सेत्स्यतीति चेन्न । तस्याः श्रुतेः मायाशबले गृहीतसङ्गतयस्सर्वे वेदा लक्षणया यत्पदमामनन्तीत्यर्थोपपत्तेः ॥

सर्वशब्दैरवाच्यस्य लक्षणा नोपपद्यते इति दोष उक्तः किलेति चेन्न । प्रसिद्धतामात्रेण लक्षणोपपत्तेः । सगुणं प्रतीतम् । निर्गुणं तु तत्स्वभावभूतं सर्वात्मकम् । सर्वैरहमिति अनुभूयमानं तत् स्वतः सिद्धम् । अहमिति साक्षिसिद्धत्वमेवेक्षणीयत्वम् । तेन च वाच्यत्वप्रसक्तिरिति न वाच्यम् । ईक्षणीयत्वं नाम प्रमेयत्वमित्यङ्गीकारात् । स्वप्रकाशस्य ब्रह्मणोऽपरप्रकाश्यत्वान्न प्रमेयत्वरूपेक्षणीयत्वमिति ॥

नैतत्पूर्वपक्षः साधीयान् । ईक्षणीये वस्तुनि आत्मब्रह्मपुरुषादिशब्दश्रवणात् । तेषां च पूर्णाभिधायित्वेन निर्गुणज्ञापकत्वात् । तथाहि **'आत्मा वा अरे द्रष्टव्यः'** इत्यत्र द्रष्टव्ये आत्मशब्दः , **'तद् ब्रह्म'** इत्यत्र विजिज्ञास्ये ब्रह्मशब्दः, **'परात्परं पुरिशयं पुरुषमीक्षते'** इत्यत्र पुरुषशब्दः पूर्णाभिधायी वर्तते ॥

ननु भवेदात्मादिशब्दः पूर्णार्थवाची । तथाऽपि यत्र दृश्ये वाच्ये च वस्तुनि प्रयुज्यते तत्र सगुणविषय एवेति नियमाङ्गीकारे को दोष इति चेदुच्यते । **'यस्यानुवित्तः प्रतिबुद्ध आत्मा' 'तरति शोकमात्मवित्'** इत्यादौ दृश्यात्मनिष्ठस्य मोक्ष उपदिश्यते । न हि गौणात्मनिष्ठस्य मोक्ष उपपद्यते । अतः निर्गुण एवायं दृश्यो वाच्यश्चात्मेति ॥

न केवलमेतावत् किन्तु श्रुतपरित्यागाश्रुतकल्पनारूपौ दोषौ प्रसज्येते। तथा हि ॥ वचनवृत्त्यैव प्रथमप्रतीतस्य शुद्धस्य ब्रह्मणो विना कारणेन परित्यागात् श्रुतपरित्यागस्सर्ववाक्येषु स्यात् । कथं शुद्धस्य प्रतीतत्वमिति चेत् आत्मब्रह्मादिशब्दानां वेदे श्रवणात् तेषां च साक्षाद्वचनवृत्त्या

पूर्णाभिधायित्वात् । आत्मादिशब्दानां पूर्णाभिधायित्वादेव तेषां माया-शबलाविषयत्वात् । प्रमाणान्तराभावाच्च शबलब्रह्मणो वन्ध्यापुत्रोपमत्वात् सर्वत्रापि वाक्येषु अश्रुतकल्पनं च स्यात् ॥

ननु सिद्धान्तिभिरेव जन्मादिसूत्रे जन्मादिकर्तृत्वं ब्रह्मलक्षणं वदद्भिः मायाशबलस्य लक्ष्यत्वेनाङ्गीकृतत्वात् कथं बन्ध्यापुत्रोपमत्वमिति चेत् - मैवम् । प्रथमसूत्रे जिज्ञास्यतयोक्तस्य सर्वज्ञस्य सर्वशक्तेः परब्रह्मण एवास्माभिर्जगज्जन्मादिकारणत्वेन लक्षितत्वाङ्गीकारात् ॥

आत्मादिशब्दः पूर्णार्थोऽपि दृश्ये श्रुतो गौणविषय इति नियमं यो ब्रवीति स तथाविधात्मशब्दोदितस्य ज्ञानं मुक्तावसाधनमित्यभिप्रैति । गौणात्मज्ञानस्य मोक्षसाधनत्वानुपपत्तेः । तथा च श्रुतपरित्यागः स्यात् । दृश्यात्मज्ञानस्य मोक्षसाधनतयाः **'यस्यानुवित्तः'** इत्यादौ श्रुतत्वादिति ॥

श्रुतपरित्यागाश्रुतकल्पने च न शक्याङ्गीकारे । एकतरस्यापि जुगुप्सितत्वात् ॥

यदि श्रुतमपि विशुद्धं ब्रह्म परित्यज्यते तर्हि सकलोऽपि वेदार्थस्त्यज्यतामविशेषात् । यदि चाश्रुतमपि मायाशबलं ब्रह्म कल्प्यते तदा चैत्यवन्दनादेः स्वर्गसाधनत्वादिकमपि कल्पनीयं स्यादविशेषात् ॥

न केवलं श्रौतस्य परमात्मनस्त्यागेऽतिप्रसङ्गमात्रम् । किन्तु महाप्रत्यवायोऽप्यस्ति अन्धन्तमोनित्यदुःखप्रातिरूपः । अत्र प्रमाणम् ।

**'अनन्दा नाम ते लोका अन्धेन तमसावृताः ।**

**तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसो बुधो जनाः ॥**

**असुर्या नाम ते लोका अन्धेन तमसावृताः ।**

**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः'** इत्यादि श्रुतयः ।

तदर्थस्तु ॥ न विद्यते नन्दः आनन्दो येषु ते **अनन्दाः** । आनन्दरहिता इति यावत् । अन्धेन अन्धयतीति अन्धं तेन चक्षुरपहारिणा **तमसा** अन्धकारेण **आवृताः** आच्छन्नाः । **ते** प्रसिद्धाः **लोकाः** सन्ति । **बुधः** बोधयतीति बुध् वेदः तस्मादपि **येऽविद्वांसः** । **वेदेन** मुख्यया वृत्त्या प्रतिपादितमपि परमात्मस्वरूपं येऽपलपन्तीत्यर्थः **ते प्रेत्य** मृत्वा तान् लोकान् अभिगच्छन्ति प्राप्नुवन्ति ॥

**असुर्याः** सुष्ठु रमाणविरुद्धत्वात् असुरप्राप्यत्वाच्चासुर्यशब्दोक्ताः **अन्धेन तमसा आवृतास्ते** लोकाः सन्ति । **ये के** च येयेऽपि **आत्महनः** वेदवाच्यपरमात्मत्यागिनः मिथ्याज्ञानिनः ते सर्वे **प्रेत्य तानभिगच्छन्ति** ॥ इति ॥

दृष्टे वस्तुनि श्रुत आत्मशब्दो गौणपर इति नियमो हेत्वन्तरेणापि अपास्तः । तथा हि । **'तमैवेकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः'** इति श्रुतस्यात्मनः **'तं जानथ'** इति दृश्यत्वश्रवणात् गौणोऽङ्गीकरणीयः स्यात् । न चैतद्युज्यते । यतोऽसौ गौणो मुमुक्षुणा हेयेषु **'अन्या वाचो विमुञ्चथ'** इति श्रुतः । अस्य च हेयत्वावचनात् प्रत्युत **'तमेवैकं जानथ'** इत्युपादेयत्ववचनाच्च ॥

हेयत्वावचनात् चशब्दसूचितात् उपादेयत्ववचनाच्च दृश्य आत्मा न गौणः किन्तु निर्गुण एवेत्युपन्यस्तम् । तत्रेयमाशङ्का । गौणानामपि ब्रह्मादिदेवानामुपादेयत्वं वक्ष्यति सूत्रकारः अङ्गावबद्धाधिकरणे । अतः 'उपादेयत्ववचनात् निर्गुणः' इति निर्गुणत्वसाधकउपादेयत्ववचनरूपो हेतुरनैकान्तिक इति ॥

तत्रेदं समाधानम् । सत्यं विष्णुपरिवारतया ग्राह्या ब्रह्मादयः । तथापि प्रधानत्वेन हेया एव । प्राधान्येन चोपादेयत्वमत्र हेतुत्वेन विवक्षितम् । **'अमृतस्यैष सेतुः'** इति वाक्यशेषात् । अतो न व्यभिचार इति ॥

एवमात्मशब्दस्य निर्गुणविषयत्वान्निर्गुणस्यैव वाच्यत्वं समर्थितम् । अस्यैवार्थस्योपपादकं हेत्वन्तरमप्यस्ति । तथा हि । **'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'** इति श्रुतौ तावत् कस्यचिन्महाप्रलये स्वस्य स्वस्मिन्नेवाप्ययो नान्यत्र लीनभाव उदाहृतः । पूर्णत्वमप्युक्तम् । स्वस्मिन्नेव स्वस्य लयात् पूर्णत्वाच्च असौ निर्गुण इति ज्ञायते । **'पूर्णमदः'** इति श्रुत्युक्तत्वाच्च वाच्य इति निर्गुणस्य वाच्यत्वसिद्धिरिति ॥

ननु स्वाप्ययः पूर्णत्वं च सगुणस्य किं न स्यादिति चेन्मैवम् । **'न हि गौण आत्मनि निर्दोषस्य लयः'** इति वदता भाष्यकारेण सगुणस्य स्वाप्ययोऽपास्तः । सगुणस्य पूर्णत्वाङ्गीकारे व्याघातः स्यात् । तथाहि सगुणस्य मायावच्छिन्नत्वादेव न देशतः पूर्णत्वम् । व्याहतेः । अवच्छिन्नस्य अनित्यत्वादेव न कालतः पूर्णत्वम् । व्याहतेः । अवच्छिन्नस्यानित्यत्वादेव गुणतोऽपि पूर्णत्वं विरुद्धमिति ॥

किञ्च **'एको देवः सर्वभूतेषु भूढः साक्षी चेता केवलो निर्गुणश्च'** इति श्रुतौ निर्गुणस्य ब्रह्मणः श्रुतत्वाच्चास्य वाच्यत्वमुपपन्नम् । अत्रापि श्रुतः सगुणः किं न स्यादिति चेन्न 'निर्गुणश्च' इति श्रूयमाणत्वात् । 'निर्गुणः' इति च पदं कथं गौणं वदिष्यति । व्याहतत्वात् । अतो न सगुणोऽत्र श्रुत इति ॥

अत्र मायावादी शङ्कते । सत्यमस्यां श्रुतौ निर्गुणादिपदप्रतिपाद्यं निर्गुणं ब्रह्मेति । किन्तु लक्षणयैव । तथा च कथमनेन निर्गुणस्य वाच्यत्वसिद्धिः । न च वाच्यं निर्गुणशब्देन निर्गुणं चेल्लक्ष्यं तर्हि तद्वाच्यं वाच्यम् । वाच्यत्वद्वारत्वात् लक्षणायाः । न च सगुणं निर्गुणपदवाच्यम् । व्याघातात् । तथा सति सगुणस्य निर्गुणत्वं स्यादिति । गुणाभावविशिष्टस्य वाच्यत्वाङ्गीकारात् । निर्विकल्पकस्वरूपमात्रस्य उपलक्ष्यत्वात् । एकमेव हि निर्विशेषं वस्तु परमसूक्ष्मं गुणाभावाद्युपाधिभिरीषत् स्थूलं जातम् ।

गुणाद्युपाधिभिस्तु स्थूलतरमित्यतो निर्गुणशब्देन गुणाभावविशिष्टवाच्यद्वारा स्वरूपमुपलक्ष्यमिति न कश्चिद्विरोधः । एवं पूर्णादिपदानामपि पूर्णत्वादि-विशिष्टवाच्यद्वारा निर्विकल्पकस्वरूपलक्षकत्वं द्रष्टव्यम् इति ॥

एवं चेत् लक्ष्यपदं ब्रह्मणो वाचकमङ्गीकरणीयम् । तथा च वाच्यत्वमेवापतितम् ॥ ननु लक्ष्यपदेनापि ब्रह्म लक्ष्यमेव न वाच्यमिति चेन्न अनवस्थाया उक्तत्वात् । किञ्च 'निर्गुणपदलक्ष्यम्' इत्यनेनापि लक्ष्यत्वे किमस्य 'निर्गुणपदलक्ष्य' इतिपदस्य वाच्यम् । 'ईषत् स्थूलं स्थूलतरं वा' इति वक्तुं न शक्यते । ईषत् स्थूले स्थूलतरे वा निर्गुणपदस्यैव अश्रवणेन तल्लक्ष्यपदस्य दूरोत्सारितत्वात् । न हि गङ्गापदे तीरेऽश्रूयमाणे सति गङ्गापदलक्ष्यतीरस्य तीरशब्दवाच्यत्वं सम्भवति । 'गङ्गायां घोषः' इत्यत्र तीरे गङ्गाशब्दप्रयोगादेव तीरं लक्ष्यमिति वक्तुं शक्यते । एवं यदि ईषत् स्थूले स्थूलतरे वा निर्गुणपदप्रयोगः स्यात् तर्ह्येव तत् निर्गुण-पदलक्ष्यमित्युच्यते । न चैवम् । अतः शुद्धमेव तत्पदवाच्यमित्यायातम् । अस्त्विति चेत् किमनया लक्षणाप्रतिपादिकप्रणाढ्या ॥

किञ्चैवं यद्यद् ब्रह्मतया प्रतिपाद्यते तत्तद् ब्रह्मेति वदता ब्रह्मवाद एव समर्थितः स्यात् ॥

एवमवाच्यत्वमतस्य अनवस्थानादिसर्वदोषास्पदत्वेन हेयत्वात् सिद्धं सर्वशास्त्रमुख्यर्थत्वं ब्रह्मणः ॥

परव्याख्यानप्रत्याख्यानर्थमुत्तरो ग्रन्थः ॥

'साङ्ख्यमतनिराकरणार्थमेतदधिकरणम् 'इति मायावादिनो वदन्ति । तथाहि । सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तत्र साङ्ख्या मन्यन्ते । यानि ब्रह्मणो जगत्कारणत्वप्रतिपादकतयाऽभ्युपगतानि **'सदेव सोम्येदमग्र आसीत्'** इत्येवमादीनि वाक्यानि तानि सर्वाणि त्रिगुणमचेतनं प्रधानमेव जगत्कारणं

प्रतिपादयन्ति । कुतः । ब्रह्मणो ज्ञानक्रियाशक्तिरहितत्वात् । ज्ञानक्रिययोर्यत्कार्यं तद्दर्शनेन हि ज्ञानक्रियेऽनुमेये । ज्ञानक्रिये च चिदात्मनो न स्तः । ज्ञानक्रिये यद्यनित्ये तर्हि ब्रह्मणस्तदात्मना परिणामो वक्तव्यः । स चायुक्तः । ब्रह्मणश्चेतनत्वेनाऽपरिणामित्वात् । ज्ञानक्रिये नित्येऽपि न सम्भवतः । तस्य निर्गुणत्वात् । त्रिगुणे तु प्रधाने परिणामिनि न ज्ञानक्रियाशक्त्योरसम्भव इत्यतस्तदेव जगत्कारणतया प्रतिपाद्यत इति । तत्प्रतिविधानार्थम् एतदधिकरणम् ॥

साङ्ख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं न शक्यमाश्रयितुं वेदान्तवाक्येषु । तस्य अशाब्दत्वात् । शब्दाप्रतिपाद्यत्वात् इत्यर्थः । तत् कुत इति चेत् **'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत, ' स ऐक्षत लोकानु सृजा इति इमाँल्लोकानसृजत' 'स ईक्षां चक्रे सप्राणमसृजत'** इति ईक्षितृत्वश्रवणात् कारणस्य । न चाचेतनस्य प्रधानस्येक्षितृत्वं सम्भवति इति ॥

नैतद्युक्तम् । तथाहि जगत्कारणत्वाभावस्य हेतूकृतं शब्दाप्रतिपाद्यत्वं किं शब्दागोचरत्वं किं वा शब्दावाच्यत्वमथवा अवैदिकत्वमुत कारणतयाऽवैदिकत्वम् । सर्वत्राप्यसिद्धिरेव । साङ्ख्यः प्रधानेऽशब्दत्वं नाङ्गीकरोति । स्वसिद्धेन हेतुनेदं निराकरणमिति चेन्न । यतः सूत्रकारोऽप्यशब्दत्वं प्रधाने नाङ्गीकरोति इति ज्ञायते । वेदेतिहासपुराणेषु प्रधानस्य सङ्ग्रहात् ॥

किं च शब्दागोचरत्वमिति प्रथमपक्षे प्रधानस्यासत्वमभिप्रेतमुत प्रामाणान्तरवेद्यत्वम् । आद्येऽसत्वोपापदनायेक्षितृत्वरूपचेतनधर्मस्यो-पन्यासोऽनुपपन्नः । कुत इति चेत् । यत्र कारणवाक्ये ईक्षितृत्वश्रवणं तत्करणवाक्यस्याचेतनप्रधानपरत्वाभावेऽपि यत्र तदश्रवणं तद्वाक्येन वा वाक्यान्तरेण वा प्रमाणान्तरेण वा प्रधानसिद्धेः ईक्षितृत्वा-

भावेनासत्त्वसाधनमशक्यम् ॥

प्रमाणान्तरावेद्यत्वमिति द्वितीयपक्षेऽपि ईक्षितृत्वरूपहेतूपन्यासो अनुपपन्नः । प्रमाणान्तरावेद्यत्वसाधकहेतोरेव वक्तव्यत्वात् । ईक्षितृत्वरूप-हेतुना ईक्षतिश्रवणोपेतवाक्यप्रतिपाद्यत्वाभाव एव सिद्ध्यति न तु प्रमाणान्तरवेद्यत्वमिति । शब्दावाच्यत्वमिति द्वितीयपक्षोऽपि न युक्तः । ब्रह्मण्यपि मायावादिरीत्या शब्दावाच्यत्वस्य सत्त्वादनैकान्तिकत्वात् ॥

अवैदिकत्वरूपस्तृतीयो हेतुः कारणतया वैदिकत्वरूपश्चतुर्थश्च जगत्कारणतया वेदान्तप्रतिपाद्याभावरूपसाध्येनैकार्थत्वान्नोपपन्नः । किञ्च ईक्षणेनैव प्रधानं जगत्कारणतया वेदान्तप्रतिपाद्यं नेति प्रतिज्ञातार्थसिद्धौ मध्येऽशब्दत्वात् इति हेत्वन्तरकल्पनं व्यर्थम् ॥

ननु ईक्षतिर्गौणो व्याख्येयः । **'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त'** इति गौणप्रायपठितत्वात् । यथा ह्यासन्नपतनं कूलमालक्ष्य कूलं पिपतिषती-त्युपचारो दृष्टः तथाऽऽसन्नसर्गे प्रधानेऽपि 'ऐक्षत' इत्युपचारो भविष्यतीति ईक्षतिरूपहेतोः प्रधानस्य जगत्कारणत्वाभावचोदनमयुक्तमिति चेन्न । **'अनेन जीवेनात्मना'** इति आत्मशब्दश्रवणात् न हि जीवश्चेतनोऽचेतनस्य प्रधानस्यात्मा सम्भवति । **'स आत्मा तत्त्वमसी'** इति च सृष्टिप्रकरणे श्रूयते । न हि चेतनस्य श्वेतकेतोरचेतनैक्यबोधमुपपन्नमिति यन्माया-वादिनोक्तं तदप्यनुपपन्नम् । यतो निर्गुणत्ववादी मायी तदीक्षणं ब्रह्मण्यमपि गौणमेवाङ्गीकरोति । गौणत्वनिरासेन मुख्यत्वप्रतिपादनं यदि स्यात् तदा सार्थकं स्यात् । न चैवमिति गौणत्वनिराकरणं व्यर्थमेव ॥

किञ्च ईक्षतेर्गौणत्वकल्पनस्य बाधकाभावमनुक्त्वा आत्मशब्द-श्रवणोपन्यासोऽसङ्गत एव । परेण मुख्यार्थस्वीकारे प्रायपठो बाधक उपन्यस्तः । तदविरोधाय वैषम्यमुच्यते । तथाहि । ईक्षितृत्वमुख्यता-निर्णायकचेतनत्वार्थकात्मशब्दसद्भावात् सत उपपन्नं मुख्यमीक्षितृत्वम् ।

अप्तेजसोश्चात्मशब्दाभावादनुपपन्नं मुख्यमीक्षितृत्वमिति वैषम्यप्रदर्शनार्थमात्मशब्दश्रवणोपन्यासो नासङ्गत इति चेन्न । तेजोऽबन्नानामपि अभिमान्यधिकरणन्यायेन देवतात्वेन प्रायपाठविरोधो नास्ति यच्छान्त्यर्थमीक्षतिर्गौणो नेयः ॥

अचेतनेऽपि प्रधाने भवत्यात्मशब्दः । आत्मनः सर्वार्थकारित्वात् । यथा राज्ञः सर्वार्थकारिणि भृत्ये 'ममाऽत्मा भद्रसेनः' इत्यात्मशब्ददर्शनात् त्याशङ्क्य यन्मायावादिनोक्तं नैवमात्मशब्दालम्बनं प्रधानं कल्प्यम् । **'स आत्मा तत्त्वमसी'** इति श्वेतकेतोस्तन्निष्ठामुपदिश्य ऐक्यज्ञानेऽपि कथं देहादिदृष्टिरित्यतः 'तस्य तावदेव चिरम् ' इति प्रारब्धकर्मणा तद्दृष्ट्यनुवृत्तिः , भोगेन प्रारब्धकर्मनिवृत्तौ ऐक्यज्ञानेन मोक्षलाभ इत्युक्तत्वात् ॥ न ह्यचेननिष्ठस्य मोक्षो युक्त इति तदप्यनुपपन्नम् । तथाहि । एवं वदतो मायावादिनः किं प्रधानैक्योपदेशानुपपत्तिर्विवक्षिता तज्ज्ञस्य मोक्षानुपपत्तिर्वा । आद्ये ब्रह्मपक्षेऽपि समानो दोषः । 'न हि जीवस्यापि ब्रह्मैक्योपदेशे युक्तः' इति जिज्ञासाधिकरणे साधितत्वात् । द्वितीयोऽप्यनुपपन्न एव । आत्मानात्मविवेकार्थमनात्मज्ञानस्यावश्यकत्वात् ॥

ब्रह्मैव ज्ञापयितुमिष्टम् । तच्च न प्रथमं सूक्ष्मतया शक्यं श्वेतकेतुं ग्राहयितुमिति तत्सम्बद्धं प्रधानमेव स्थूलतयाऽऽत्मत्वेन ग्राह्यते । यथाऽरुन्धतीमतिसूक्ष्मां दर्शयितुं तत्सन्निहितां स्थूलतारकां दर्शयन्ति 'अरुन्धती' इति तथेत्याशङ्क्य यन्मायावादिनोक्तम् ' एवं सति स्थूलतारावत् नायमात्मा इति हेयत्वं ब्रूयात् । न चैवमब्रवीत् । अतो नैषा कल्पना युक्तेति तदप्यनुपन्नम् ॥ तथाहि । आत्मशब्दस्योक्तरीत्या गौणत्वे चोदिते 'गौणो न बाधकाभावात् ' इति बाधकाभाव एव वक्तव्यः । 'हेयत्वं नोक्तम् ' इत्यसङ्गतम् ॥ किञ्च मायावादिकृताशङ्कैवानुपपन्ना । यतः साङ्ख्योऽद्वैतज्ञानार्थं प्रधानोपदेशं न मन्यते ॥

नेयं स्थूलताराऽरुन्धती' इतिवत् प्रधानं नात्मेति हेयत्वावचनात् प्रधानमेवात्मत्वेन सूक्ष्मब्रह्मज्ञानार्थमुच्यत इति न' इति यन्मायावादिनोक्तं तन्न । हेयत्वावचनस्यानैकान्तिकत्वात् ।। तथाहि । अन्नमयादयो न ब्रह्मेति मायावादिमतम् । तत्रापि अन्नमयं न ब्रह्मेत्यादिवचनं नास्ति । अन्नमयस्याब्रह्मत्वे **'ये प्राणं ब्रह्मोपासते'** इति प्राणमयस्य ब्रह्मत्ववचनं ज्ञापकम् ।। एवं प्राणमयस्याब्रह्मत्वे मनोमयस्य ब्रह्मत्ववचनमित्युत्तरोत्तर-ब्रह्मत्ववचनं तत्र ज्ञापकमिति चेन्न । **'सदेव सोम्य'** इत्यादिप्रकरणेऽपि सच्छब्दार्थस्याब्रह्मत्वे **'भूय एव मा भवान् विज्ञापयतु'** इत्यादि प्रतिवचनरूपज्ञापकसौलभ्यात् ।।

**'यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवति '** इति दृष्टान्तपूर्वकमेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्च प्रधानकर्तृत्ववादे नोपपद्यते इति यन्मायावादिनोक्तं तदपि न । प्रधानस्य सर्वात्मकत्वाभ्युपगमात् । प्रत्युत ब्रह्मवाद एव प्रतिज्ञाविरोधः ।।

भोग्यवर्गस्य प्रधानात्मकत्वेऽपि भोक्तृवर्गस्य न प्रधानात्मकत्वमस्तीति चेत् । सत्यम् । ब्रह्मणस्तु न किञ्चित् । तस्यापरिणामित्वात् । जडैक्यस्य मायिनाऽनङ्गीकारात् भोक्त्रक्यैस्य च निरस्तत्वात् इति ।।

सच्छब्दवाच्यं प्रस्तुत्य 'स्वं ह्यपीतो भवति ' इत्युच्यते । न ह्यचेतने चेतनस्याप्ययः सुप्तौ लये च सम्भवति । अतश्च न प्रधानं सच्छब्दवाच्यमिति मायावादिना यत्प्रलपितं तदप्यपेशलम् । एकीभावस्य ब्रह्मपक्षेऽप्यसम्भवात्, परिष्वङ्गमात्रस्य प्रधानेऽपि सम्भवात् ।

यदि च क्वचिदप्यचेतनं प्रधानं जगतः कारणमुच्येत वेदान्तेषु तर्हि कथञ्चिदीक्षणादिकं कल्प्येत । न चैवम् । अतो वेदान्तोत्पाद्याया अवगतेरैकरूप्याच्च न प्रधानं जगत्कारणमिति यदुक्तं मायावादिना तदपि न शोभते । गतिसामान्यस्य ब्रह्मविषयत्वस्य साङ्ख्यं प्रति असिद्धत्वात् ।

ईक्षतिकर्तृत्वेन गतिसामान्यं ज्ञाप्यत इति चेत्तर्हि ईक्षतेर्नाशब्दमिति सूत्रेणैवालम् ॥

एवं ब्रह्मविषयस्य गतिसामान्यस्य परं प्रत्यसिद्धत्वादेव प्रधानं न जगत्कारणं वेदान्तवेद्यम् । **'स कारणं कारणाधिपाधिप'** इति साक्षात्सर्वज्ञस्येश्वरस्य जगत्कारणत्वस्य श्रुतत्वात् । ज्ञानक्रियाशक्ती त्वपरिणामिनोऽपीश्वरस्य सवितुः प्रकाशनशक्तिरिव युज्येते इति मायावादिनोक्तमपि परास्तम् । श्रुत्यवष्टम्भेन ब्रह्मकारणत्वस्य **'गतिसामान्यात्'** इत्यत्रैव समर्थितत्वात् गतार्थता च ॥

किञ्च **'सदेव'** इत्यादिवाक्यबोध्यं प्रधानं नेति निरस्य किं विशिष्ट-ब्रह्मणः परिणामित्वमेतद्वाक्यबोध्यमित्युच्यते मायावादिना किं वा कर्तृत्वं बोध्यमिति यद्वा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यमिति । नाद्यद्वितीयौ । विशिष्टे **'सदेव'** इत्यादिवाक्योक्तसत्त्वायोगात् समन्वयाधिकरणेऽखण्ड एव समन्वयस्य प्रतिज्ञातत्वेनात्राखण्डस्यैव वाच्यत्वाच्च । द्वितीये वैयधिकरण्यं च । न हि प्रधानं परिणामीति प्राप्ते ब्रह्म कर्त्रिति सिद्धान्तो युक्तः । अत एव न तृतीयः । प्रधानं परिणामीति प्राप्तेऽधिष्ठानं ब्रह्मेत्यस्य व्यधि-करणत्वात् ॥ तथा च न साङ्ख्यमतनिराकरणार्थमेतदधिकरणारम्भः ॥

प्रकृतसङ्गतिपर्यालोचनयाऽप्यत्र वाच्यत्वसमर्थनमेवोपपन्नं न साङ्ख्यनिराकरणम् । तथा हि । समस्तस्यापि शास्त्रस्य ब्रह्मणि समन्वये प्रतिज्ञाते यद्यपि मुख्यया वृत्त्या शब्दगोचरता साङ्ख्यनिराकरणं चेत्युभयमपि प्रतिपाद्यं भवति । उभयाऽभावेऽपि समन्वयानुपपत्तेः । तथापि शब्दगोचरतैव प्रथमप्रतिपाद्येति तदेवात्र प्रतिपद्यते न साङ्ख्यनिराकरणम् । तदुत्तरत्र करिष्यते ॥

कुतः शब्दवाच्यतायाः प्रथमप्रतिपाद्यत्वमिति चेत् ब्रह्मणोऽवाच्यत्वे तस्मिन् शब्दसम्बन्ध एवानुपपन्नः । जगत्कारणत्वादिवाक्यविचारस्तु दूरे ।

साङ्ख्यनिराकरणाभावे तु सृष्ट्यादिवाक्यानामेव समन्वयानुपपत्तिः । अतः प्रथमं वाच्यत्वसमर्थनेन समन्वयसम्भावनायां सत्यां वाक्यविशेषनिष्ठस्य विचारस्य पश्चादवसर इति ॥

ननु वाच्यत्वाभावेऽपि लक्षणया वृत्त्या समन्वयो भविष्यतीत्यवाच्यत्वाक्षेपं निर्दलतयोपेक्ष्य सूत्रकारेणादौ साङ्ख्यमतं निराकृतमित्यङ्गीकारे कथमसङ्गतिरिति चेत् स्यादेवं यदि सूत्रकारः शब्दानां ब्रह्मणि लक्षणामभिप्रेयात् । न चैतदस्ति । एवञ्चेत् सूत्रकारः कथं समन्वयं ब्रूयात् । किन्त्वन्वयमात्रं ब्रूयात् । समन्वयं चाब्रवीत् । तेन ज्ञायते न लक्षणा सूत्रकारस्याभिप्रेता किं नाम मुख्यवृत्तिरेवेति ॥

समन्वयं ब्रुवता कथं मुख्यवृत्तिरभिप्रेतेति ज्ञायत इति चेत् समीचीनो ह्यन्वयः समन्वयः । स च शब्दस्य वाच्यार्थ एव घटते । तत्रैव साक्षात् शक्तिमत्त्वात् । लक्ष्यार्थे तु वाच्यार्थद्वारेणान्वयो न समीचीनः । अतः समन्वयशब्दं प्रयुञ्जानेन सूत्रकृता वाच्यवाचकभाव एव प्रतिज्ञात इति ज्ञायते । स चावाच्यत्वशङ्कानिरसनमन्तरेण सर्वथाऽप्यसम्भावितः स्यादिति वाच्यत्वसमर्थनमेव प्राथमिकमिति ॥

वाच्यार्थे समन्वयः । लक्ष्यार्थेऽन्वयमात्रमिति यदुक्तं तदभ्युपगम्योक्तम् । वस्तुतो लक्षणावादेऽन्वय एव नोपपद्यते । कुतः समन्वयः । अवाच्ये लक्षणाऽसम्भवस्योक्तत्वादिति ॥

तदुपरि एवमाशङ्का ॥ सत्यं समीचीनोऽन्वयः समन्वयः । समीचीनता तु तात्पर्यवत्ता । सा च लाक्षणिकेऽप्यर्थे शब्दानां सम्भवतीति न समन्वयसिद्ध्यर्थं वाच्यत्वं समर्थनीयमिति । तत्रेदमुत्तरम् । संशब्दस्य तात्पर्यवत्त्वमित्यर्थान्तरं व्याख्यायापि जघन्यवृत्त्या लक्षणया समन्वयाश्रयणे कारणं नास्तीति ॥

ननु कथं कारणं नास्ति । समन्वयसूत्रे निर्गुणे ब्रह्मणि समन्वयः

सूत्रकृता प्रतिज्ञातः । न च तत्र शब्दानां वचनवृत्तिः सम्भवति । तस्या द्रव्यादिसम्बन्धनिबन्धनत्वात् । निर्गुणे च तदभावात् । अतो ज्ञायते लक्षणाऽऽश्रिता सूत्रकृतेति । एवं च सति संशब्दस्यापि तात्पर्यवत्तारूप उक्त एवार्थो निश्चीयत इति ॥

स्यादप्येवं यदि निर्गुणे समन्वयः प्रतिज्ञातः स्यात् । न चैवम् । तथाहि । किमत्र समन्वयसूत्रे पूर्वप्रकृतं निर्गुणं ब्रह्म तदिति परामृश्यते उत पूर्वं सगुणस्य प्रकृतत्वेऽपि तत्परामर्शासम्भवेन जहदजहल्लक्षणया निर्गुणं परामृश्यते । नाद्यः । अतीतत्रिसूत्र्यां निर्गुणस्याप्रकृतत्वात् । लक्षणसूत्रे जन्मादिकारणत्वेन लक्षिते हि ब्रह्मणि शास्त्रं प्रमाणमभिधाय तस्य समन्वयमाह सूत्रकारः । न च तन्निर्गुणं जन्मादिकारणत्वगुणयोगात् । जन्मादिकारणत्वं च न तटस्थलक्षणमिति उपपादितं जन्माधिकरणे ॥

मा भूल्लक्षणसूत्रे निर्गुणस्य प्रकृतत्वम् । प्रथमसूत्रे जिज्ञास्यतयोक्तं निर्गुणमेव । न हि तस्य कश्चिद्धर्मः श्रूयते इति न वाच्यम् । जन्मादिसूत्रे जगज्जन्मादिकारणत्वेन लिलक्षयिषितस्यैव प्रथमसूत्रे जिज्ञास्यत्वोक्तेः । न ह्यन्यज्जिज्ञास्यतया प्रतिज्ञायान्यलक्षणमुच्यते । अनुपयोगादिति ॥

न द्वितीयः । त्रिसूत्र्यां प्रकृतस्य सगुणब्रह्माख्यमुख्यार्थस्य समन्वयविषयतया त्यागेऽसम्भवाभावात् । अतो निर्गुणसमन्वयस्याप्रतिज्ञातत्वान्न लक्षणाऽऽश्रयणमत्र युक्तम् । किन्तु प्रथमप्राप्तया मुख्यवृत्त्यैव समन्वयः । तदर्थ एव संशब्दोऽपीति ॥

किञ्च निर्गुणं चेदत्र तच्छब्देन परामृश्यते तदा तत्र लक्षणाऽपि न सम्भवतीति व्यर्थं समन्वयसूत्रमापन्नम् । तथा हि । निर्गुणमप्रमेयम् अज्ञेयत्वात् । यज्ज्ञेयं तदेव प्रमेयं दृष्टं घटवत् । निर्गुणं शब्दप्रमाणाविषयम् अवाच्यत्वात् । वाच्यस्यैव शब्दप्रमाणविषयत्वदर्शनात् स्वर्गादिवत् । ज्ञेयत्वाङ्गीकारे च निर्गुणत्वव्याघातात् । तथा च निर्गुणस्याप्रमेयत्वात् तत्र

शास्त्रस्य कथञ्चन लक्षणाऽपि न सम्भवति । लक्षणा हि लक्ष्यार्थप्रतीतिपूर्विका दृष्टा । न हि तीरं स्वरूपतो गङ्गासम्बन्धित्वेन च प्रमाणतोऽज्ञातं गङ्गाशब्देन ज्ञाप्यते । लाक्षणिकोऽपि हि शब्दो लक्ष्यप्रमोत्पादाय प्रयुज्यते । अन्यथा प्रयोजनान्तराभावेन वैयर्थ्यप्रसङ्गात् । तथा चाप्रमेये लक्ष्यवस्तुनः स्वरूपेण मुख्यार्थसम्बन्धित्वेन चोपस्थितिरूपहेतोः लक्ष्यार्थप्रतीतिरूपफलस्य चासम्भवात् लक्षणाऽसम्भवः । तथा च समन्वयसूत्रं व्यर्थमापद्येतेति ॥

ननु प्रसिद्धिरेव लक्षणाहेतुर्न प्रमाणप्रसिद्धिः । विशेषणवैयर्थ्यात् । तथाच स्वप्रकाशतया स्वतः सिद्धे कथं लक्षणा न सम्भवतीति चेत् यथा न सम्भवति तथोत्तरत्रोच्यते ॥

ननु लाक्षणिकाः शब्दा लक्ष्यप्रमामनुत्पादयन्तोऽपि विपरीताकार व्यावर्तनेन प्रयोजवन्तो भविष्यन्तीति चेन्न ।जन्माधिकरणे निराकृतत्वात् ॥

एवं यतो निर्गुणे समन्वयो नोपपन्नः तस्मादस्मदीयं वासुदेवाख्यं सगुणं परं ब्रह्म शास्त्रेण जिज्ञास्यमङ्गीकरणीयम् । तथापि प्राक् सगुणस्य हेयत्वमभिहितम् । इदानीं तु जिज्ञास्यत्वमिति विरोधो न शङ्कनीयः । पूर्वम् अनिर्वचनीयाविद्यावच्छिन्नस्य सगुणस्य अप्रामाणिकत्वं प्राकृतसत्वादिगुणबद्धस्य हेयत्वादिकं चाभिहितम् । इदानीं तु ज्ञानानन्दाद्यनन्तगुणार्णवत्वेन सगुणं विष्ण्वाख्यं परब्रह्मोपादेयमुच्यत इति विरोधाभावात् ॥

ननु **'एकमेवाद्वितीयम्'** इति ब्रह्मणो निर्गुणत्वमभिधीयते । अतः कथं गुणार्णवत्वमिति चेत् 'एकम्' इत्यस्य स्वगतभेदविवर्जितम् इत्यर्थः । अद्वितीयम् इत्यस्य समाधिकरहितमित्यर्थश्चानुसन्धेयः ॥

न केवलं निर्गुणे शास्त्रसमन्वयो नोपपद्यते । किन्तु तस्य सत्वमेवानुपपन्नम् । सर्वप्रमाणागोचरत्वाच्छशविषाणवत् । सर्वप्रमाणाविषयत्वं कुत इति चेत् अज्ञेयत्वान्न कस्यापि प्रमाणस्य विषयः ।

वाच्यत्वलक्ष्यत्वसदृशगुणयोगित्वाभावाच्च न शाब्दत्वम् । रूपाद्यभावाच्च न प्रत्यक्षत्वम् । लिङ्गसम्बन्धाभावाच्च नानुमेयत्वमिति ॥

ननु प्रमाणागोचरस्यापि निर्गुणस्य स्वप्रकाशतया सिद्धिर्भविष्यतीति चेत्तर्ह्यस्तु । किन्तु समन्वयविषयतया न वक्तव्यम् । शास्त्रविषयत्वे स्वप्रकाशत्वहानिप्रसङ्गात् । प्रकाशान्तरव्यावृत्तिर्हि स्वप्रकाशशब्देनाभिप्रेता मायावादिना । तथाच स्वप्रकाशतया ब्रह्मसिद्धिश्चेत् शास्त्राविषयत्वमापतितम् । शास्त्रविषयत्वेऽङ्गीक्रियमाणे निर्गुणत्वहानिरित्यायातम् । तदेवमेकं सन्धित्सतोऽन्यच्च्यवत इत्याभाणकमनुसरति ।

पुनर्मायावादी एवं शङ्कते । स्वप्रकाशस्यापि ब्रह्मणो न शास्त्रविषयत्वं विरुद्धम् । वचनजन्यस्फुरणाश्रयतया तत्कर्मतया वा वचनविषयत्वाभावेन स्वप्रकाशत्वम् । वचनजन्यवृत्तिव्याप्यतया तद्विषयत्वं चेति व्यवस्थोपपत्तिरिति । तदसत् । स्फुरणं हि ज्ञातता वा ज्ञानं वा । नाद्यः । ज्ञाततास्वरूपस्यैव भक्तिपादे निराकरिष्यमाणत्वात् । द्वितीयेऽपि ज्ञानाश्रयातया विषयत्वं न कचिदिति कर्मत्वमेवाश्रयणीयम् । ज्ञानकर्मत्वं च ज्ञानविषयत्वारिक्तं नास्तीति वचनजन्यज्ञानविषयत्वमुक्तं स्यात् ॥

वचनजन्यवृत्तीत्यत्र वृत्तिरिति ज्ञानं तदतिरिक्तं वोच्यते । न तावदतिरिक्तम् । प्रमाणाभावात् । आद्ये तु तद्व्याप्यत्वं तद्विषयत्वातिरिक्तं न निरूपयितुं शक्यमिति वचनजन्यज्ञानविषयत्वमेवोक्तं स्यात् । तथा च व्याघात इति । अतो मायावादी वृथैव वेदस्य निर्गुणविषयतया योजने यतते ॥

पुनराशङ्कते । श्रुतिसूत्रयोस्तावदेकार्थत्वं युक्तम् । अन्यथा करणेतिकर्तव्यताभावानुपपत्तेः । श्रुतयश्चोपक्रमादिवशात् नित्यशुद्धबुद्धमद्वितीयं निर्गुणमेव प्रतिपादयन्त्यो निरवकाशाः प्रतीयन्ते । ततस्तन्मीमांसाऽपि तद्विषयैव । तथा चान्यथाऽनुपपत्तेर्यथा कथञ्चित् श्रुतिसूत्रयो-

निर्गुणविषयत्वमुपपादनीयम् । श्रुतेनिर्गुणविषयत्वानङ्गीकारे मीमांसाया अपि तद्विषयकत्वायोगेन निर्विषयत्वापत्त्या अप्रामाण्यापत्तिरिति । तन्न । सगुणविषयत्वेन सविषयत्वोपपत्तेः । न चोपक्रमादिवैगुण्यम् । **'यतो वा इमानि भूतानि जायन्ते'** इत्यादौ साक्षाज्जन्मादिकारणत्वेन , **'नारायणं महाज्ञेयम्'** इति नारायणशब्दोदितगुणवत्तया च सर्वत्र सगुणस्यैव प्रतीतेः ।

सर्वप्रमाणाविषयस्य शास्त्रविषयत्वाङ्गीकारे यो व्याघात उक्तो नासौ सूक्ष्मदृष्टिमाश्रित्य । किन्तु स्थूलदृष्टिभिरयं व्याघातः सुज्ञानः ।। यतः सर्वशब्दैरवाच्यं ब्रह्मेत्युक्त्वा पुनः शास्त्रं तद्विषयमित्युन्मत्तवद्वदति ।।

यतो निर्गुणं वक्तुं ज्ञातुं च न शक्यं तस्माच्छास्त्रस्य तद्विषयत्वाग्रहोऽपि त्याज्यः । अतो निर्गुणसमन्वयस्याप्रतिज्ञातत्वात् वचनवृत्त्यैव समन्वयोऽयमिति वाच्यत्वसमर्थनमेव प्रथमसङ्गतं न साङ्ख्यनिराकरणमिति सिद्धम् ।।

ननु यथा सूत्राविवक्षितं साङ्ख्यनिराकरणं कुर्वतो मायावादिनो दोषः तथा तन्निराकरणं कुर्वतामाचार्याणामपि कथं न दोषः स्यात् । न हीदं कस्यचित्सूत्रस्यार्थतयोच्यत इति चेन्न । यावदापातरमणीयं परेषां व्याख्यानं शिष्याः पश्येयुर्न तावदाचार्योक्ते सूत्राणां निजार्थेऽप्यञ्जसाऽऽदरं कुर्युः । किमसौ सूत्रार्थः किं वा परोक्त इति सन्देहावस्कन्दनात् । निराकृते त्वपव्याख्याने नैरन्तर्यादराभ्यामाचार्योक्तार्थमेवोपादाय शास्त्रार्थमीमांसायां निर्विचिकित्साः प्रवर्तेरन् । अतो माभूदयं सूत्रार्थस्तथाऽपि सूत्रार्थ-ग्रहणोपायत्वात् व्याकरणादावुदाहरणप्रत्युदाहरणप्रदर्शनादिवन्न कश्चन दोषमावहति । किं नाम गुणहेतुरेव भवतीति ।।

ननु यदि वाच्यमेव ब्रह्म कोऽर्थस्तर्ह्यवाच्यत्वाभिधात्रीणां श्रुतिस्मृतीनामिति चेत् । आश्चर्यतमत्वादवाच्यमित्युच्यते । दुर्लभं ह्याश्चर्यं भवति । न ह्यनन्तगुणपूर्णं ब्रह्म सुलभम् ।। आश्चर्यं हि वस्तु वाच्यमपि न

तेन तेनाकारेण विशेषतो निर्देष्टुं शक्यते । व्युत्पत्त्यभावात् वाङ्मनसयोर्व्याकुलत्वाद्वेत्यतोऽवाच्यमित्युच्यते । मुख्यातिक्रमेणामुख्य-प्रयोगे किं प्रयोजनमिति चेत् स्यादयं प्रयोजनानुयोगो यद्ययं स्वतन्त्रप्रयोगः स्यात् । नैतदस्ति रूढत्वात् । रूढगौणीयमिति भावः ॥

तदेवं ब्रह्मणो वाच्यत्वात् गतिसामान्याच्च युक्तं समन्वयसूत्रमिदं सिद्धम् ॥

**॥इति ईक्षत्यधिकरणं सम्पूर्णम् ॥**

**यदि प्रीतोऽसि देवेश मध्वेश सेवयाऽनया ।**
**देहदार्ढ्यं मनोदार्ढ्यं दत्वेमं पूरय प्रभो ॥**

इति 'शेषवाग्वज्रे'

**श्रीश्रीविश्वनन्दनाख्यभिक्षुसङ्गृहीते**

**श्रीश्रीपादराजप्रणीतवाग्वज्रानुसारिणि**

**जन्मादिचतुराधिकरणी समाप्ता ॥**

**॥ श्री कृष्णार्पणमस्तु ॥**